यानि लिखितानि पद्यानि तदुक्तक्रमेणैव ग्रन्था रचिता। अनुमीयते प्रथमतो मण्डनमिश्रविरचितविधिविवेकस्य न्यायकलिकैव रचिता(१)अस्य ग्रन्थस्योपादानं प्रायस्त ग्रन्थेषु दृश्यते ततो ब्रह्मसिद्धिव्याख्या ब्रह्मतत्त्वसमीक्षा(२) तत्त्वबिन्दुग्रन्थः(३) इदं ग्रन्थद्वयं न्यायवार्त्तिकतात्पर्यटीकायां

(१) केचित्तु अमुं ग्रन्थं न्यायकणिकानाम्ना व्यवहरन्ति। राणसीस्थराजकीयसंस्कृतपाठशालीयपुस्तके "इति पूर्वका समाप्ता"इति लेखोऽपि दृश्यते । ग्रन्थोऽयं काशीविद्यासुध धिपत्रे मुद्रितः ।

(२) ब्रह्मतत्त्वसमीक्षा मण्डनमिश्रकृतब्रह्मसिद्धेर्व्याख्या।

(३) तत्त्वबिन्दुग्रन्थाष्टिप्पणसहितः पण्डितपत्रे मुद्रितः लघुत्वात् दुरूहः अस्य एका महती टीका ममान्तिके श्लोकात्मिका वर्तते ।

(४) न्यायवार्त्तिकतात्पर्यटीकायाः पुस्तकत्रयं ममान्तिके र्तते तत्र प्रथमे पुस्तके लिपिकालोऽधोलिखितप्रकारेण खितोऽस्ति ।

"इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्यटी प्रथमोऽध्यायः समाप्तः ।ळ्।।ळ्।।ळ्।। स्वस्ति संवत् ॥ १४५४ सम शिवनवदि १० रविवासरे ।।ळ्।। ॐनमो नारायणाय ॥ स्वस्ति ॥ करोतु कल्याणं विश्वेशः सर्वसम्पदः ॥ भवानी च जग जयं ते विदधातु च ॥ तावद्गर्ज्जन्तु कवयः शाखायां यथा । महेशामृतचीत्कारवाणी यावन्न निःसृता ॥ छ ॥ म् ॥ ॥ गर्व्वं वहन्तु भुवि भाविनि लेखकाऽत्र ? शून्याटवीम रीक्षितमत्तसत्त्वाः ॥ श्रीमाधवांघ्रियुगपद्ममधुव्रतोऽपि यावत न हरिर्नरसिंहनामा ॥ छ ॥"

वाराणसीस्थराजकीयसंस्कृतपाठशालीयं तु न्यायवार्त्ति त्पर्यटीकापुस्तकं गोरक्षशतकं च सर्वविद्यानिधानकवीन्द्रा सरस्वतीनां पुस्तकम् । अयं च १६९६ वैक्रमाब्दासन्न वाराणस्यां वर्तमानः गोदावरीतटात् समायातः

समुद्धृतमिति पश्चान्न्यायवार्त्तिकतात्पर्यटीकाया निर्माणमियं टीका च सांख्यतत्त्वकौमुद्यां समुद्धृता योगभाष्यटीका-यां तत्त्ववैशारद्यां तत्त्वकौमुदी समुद्धृता भामत्यां तु आदिम-ध्यावसानेषु सर्वे ग्रन्था उपात्ता इति ।

केचित्तु भामत्यामारम्भे

"मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥"

इति दृष्ट्वा मार्तण्डतिलकस्वामिनः शिष्यो वाचस्पतिमिश्र इति वदन्ति तन्न शास्त्रतात्पर्यानवबोधात् तात्पर्यटीकायां ८७ पृ. "अस्माभिस्त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखै"रित्यु-क्तत्वाच्च । प्रपञ्चितं चास्माभिर्वात्स्यायनचरिते ऽधस्तात् ।

मुम्बईनगरे द्वितीयावृत्तिमुद्रिते सटीककाव्यप्रकाशपु-स्तके भूमिकायां ३१ पृ. विश्वनाथकृतकाव्यप्रकाशदर्पणे "इति वाचस्पतिमिश्रः" ४० पृ० दीक्षितभीमसेनकृतायां सुधा-साराख्यायां काव्यप्रकाशटीकायां "सर्वतन्त्रविदो वाच-स्पतिमिश्राः" इति प्रदर्शयंता काव्यप्रकाशस्य टीका वाच-स्पतिमिश्रेण कृता इति स्वकृतटीकोपोद्घाते २ पृष्ठे कल्पि-तम् एतच्चिन्त्यम् ।

श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येण सांख्यतत्त्वकौमुदी-भूमिकायां निरूपितं यद्वाचस्पतिमिश्रेण खण्डनोद्धारः कृत

---

शतकपुस्तकं संगृहीतवान् तत्र उक्तसमय एव लिखितः । अपि च १६२७ ईशवीयवर्षात् १६'१६ घर्षान्तं शाहजहांनृपति-समयः तस्मादेव उक्ताचार्यैः काशीप्रयागयात्रिकाणां करो विमो-चित इति ऐतिहासिका वदन्ति ।

अस्मन्निकटे पुस्तकत्रयं वर्तत इति तद्वर्णनं च कृतमधस्तात् ।

इति श्रीहर्षादर्वाचीन इति । परं तु वाचस्पतिमिश्रकृता॰ यवार्त्तिकतात्पर्यटीका उदयनाचार्येण व्याख्याता उदयना॰ कृता किरणावली न्यायकुसुमाञ्जलिरपि खण्डनग्रन्थे श्री॰ समुद्धृतौ पुनरपि खण्डनग्रन्थस्योद्धारो वाचस्पति॰ कृत इति विजानाति तर्कवाचस्पतिमहाशय इति ।

अस्माभिरनुमीयते तत्त्वचिन्तामणिप्रकाशाख्यन्या॰ न्यायतत्त्वालोकाभिधन्यायसूत्रवृत्ति-न्यायसूत्रोद्धारादिक॰ वीनवाचस्पतिमिश्रेण काव्यप्रकाशटीका खण्डनखण्ड॰ द्धारश्च कृत(१) इति । अनेन स्वरचितग्रन्थेषु न॰ तत्त्वालोकादिषु षड्दर्शनटीकाकारो वाचस्पतिमिश्रः स॰ धृत(२) इति । अस्य समयादिनिरूपणे ।

"श्रीवाचस्पतिमिश्रेण मिथिलेश्वरसूरिणा ।
लिख्यते मुनिमूर्धन्यश्रीगोतममतं महत् ॥"

इति न्यायसूत्रोद्धारारम्भे ।

"शिवेनोरसि विधृतौ पादौ नत्वापवर्गदौ ।
व्यलेखि न्यायसूत्राख्यं चैत्रे वस्वक्षिवासवे ॥"

इति सूत्रोद्धारान्ते दर्शनात् वस्वक्षिवासवे इत्यनेन १॰ वैक्रमे वर्षे ग्रन्थो ऽयं निर्मितः सुधामधुनामाप्येको ग्रन्थो॰ स्पतिमिश्रकृतो विज्ञायते तत्र लिपिकालः १३०३ शा॰ दृश्यते इत्युभयोरविरोधात् १२९३ शाकाब्देभ्यः पूर्व॰

(१) खण्डनोद्धारोऽपि काशीविद्यासुधानिधिपत्रे मुद्रित॰

(२) खण्डनोद्धारे २५ पृष्ठे "विस्तरस्तु तत्त्वालोके म॰ इतीहोपरम्यते" तत्त्वालोकाख्ये न्यायसूत्रव्याख्याने १ अ० १॰ २१ सू० बाधनालक्षणं दुःखमित्यत्र च षड्दर्शनटीकाकृद्वाच॰ मिश्रः समुद्धृतः ।

लादेशे उक्तवाचस्पतिमिश्रस्य स्थितिरासीदित्यनुमीयते । वि-
स्तरस्तु खण्डनखण्डखाद्योद्धारभूमिकायां निरूपितोऽस्माभिः ॥
अपरोऽपि वाचस्पतिमिश्रो विवादचिन्तामणि-तीर्थचि-
न्तामणि-श्राद्धचिन्तामण्यादिधर्मशास्त्रनिबन्धकर्ता अन्योपि सि-
द्धान्तशिरोमण्यादिज्यौतिषनिबन्धव्याख्यातुर्लक्ष्मीदासस्य पिता
वाचस्पतिमिश्रो भिन्न एवेति तत्तद्ग्रन्थसमालोचनाद्व्यक्तं
भविष्यतीति ॥

---

## न्यायवार्त्तिकतात्पर्यटीकापरिशुद्धिकर्तुः

## श्रीमदुदयनाचार्यस्य चरितम् ।

---

उदयनो(१) वा उदयनाचार्यो वा न्यायाचार्योदयनो वा उदयकरो(२) वा उदयाकरो(३) वा उदयंकरो(४) वा उदय-

---

(१) "न्यातेने किरणावलीमुदयन"इति किरणावल्यामुदयनाचार्योक्त्या न्यायाचार्योदयन एव नान्यः । विस्तरस्तु अग्रे निरूपयिष्यते ।

(२) "इदमुदयकरेण न्यायलोकागमाना"मिति कलिकातामुद्रितात्मतत्त्वविवेकपुस्तकान्ते दर्शनात् स एव नान्यः । वस्तुतस्तु "तदिदमुदयनेन न्यायलोकागमाना"मित्येव पाठस्तालपत्रादिलिखितपुस्तकेषु दृश्यते ।

(३) "उदयाकरसूनुना"इति ईश्वरप्रत्यभिज्ञासूत्रग्रन्थे दर्शनात् सोऽन्यः ।

(४) "शब्देन्दुशेखरे ज्योत्स्नां प्रकरोत्युदयंकर"इत्युक्त्या नागेशभट्टादपि पश्चात्कालभावीति सुतरां भिन्नः ।

नाचार्यभादुडी(१) इत्यादिनामभिस्तत्तद्देशीया गुणैकपक्ष
नोऽनेकैः प्रकारैः किंवदन्त्यादिभिर्यायाचार्यमुदयनाचार्य
यन्ति । किं तु वैशेषिकभाष्यटीका वा प्रशस्तपादभाष्य
किरणावली, वैशेषिकशास्त्रसारभूता लक्षणावली, न्यायभाष्य
काटीकाटीका न्यायनिबन्धापरनामधेया तात्पर्यपरिशुद्धिः,
शुद्धिर्बोधसिद्धिर्वा न्यायपरिशिष्टाख्या न्यायसूत्रवृत्तिः,
तत्त्वविवेको न्यायकुसुमाञ्जलिश्च येनोदयनाचार्येण रचित
एवेदानीं वर्णनीय इति नासौ वङ्गदेशीयो न वा दाक्षिणा
किं तु मैथिल इति भविष्यपुराणपरिशिष्टे भगवद्भक्तमाहा
३० अध्याये स्पष्टमुपलभ्यते तथाहि—

अथ वक्ष्ये तृतीयस्य हरेरंशस्य धीमतः ।
उदयनाचार्यनाम्नस्तु माहात्म्यं लोमहर्षणम् ॥ १ ॥
भूत्वा स मिथिलायां तु शास्त्राण्यध्यैष्ट सर्वशः ।
विशेषतो न्यायशास्त्रे साक्षाद्वै गोतमो मुनिः ॥ २ ॥
बौद्धसिद्धान्तमुग्धान्तःसुखाय हितकारिणीम् ।

(१) "उदयनाचार्यभादुडी भिन्नः चाटुर्जी–वानुर्जी–गाङ्
भादुडीत्याद्युपाधयस्तु वल्लालसेनेन दत्ता अस्य समयस्तु तत्कृ
श्रुतसागरादिग्रन्थेभ्यः १०८९ शाकाब्दः । उदयनाचार्येण लक्ष
वल्यां ९०६ शाकाब्दो ग्रन्थनिर्माणकालो लिखित एव अ
न्यायवार्त्तिकतात्पर्यपरिशुद्धौ "अमृतस्थाने अमूरुत इति दाक्षि
त्यानाम्" । "गौडाः शषसाः सा इति" । अत्र गौडा वङ्गदेशी
एवं निन्दालिखनादुभयभिन्नत्वं निर्विवादम् । विस्तरस्तु न्या०
ता० परिशुद्धिभूमिकायाम् ।

वल्लालसेनस्तु १०८९ वर्षेऽद्भुतसागरग्रन्थं कृतवान् किं तु
क्ष्मणसेनस्य पुत्रो वल्लालसेनो वा वल्लालसेनस्य पुत्रो लक्ष्म
इत्यादि विचारोऽग्रे समुद्भावयिष्यते ।

वितेने विदुषां प्रीत्यै विमलां किरणावलीम् ॥ ३ ॥
एकदा बौद्धसिद्धान्तान् प्रकटीकर्तुमागतः ।
बौद्धाचार्यस्तीरभुक्तौ नृपग्रामे समागतः ॥ ४ ॥
स्वशिष्यैः स्वीयशास्त्रस्य पुस्तकैर्बहुभिर्वृतः ।
राजानं प्रेषयामास दूतं दर्पवशादसौ ॥ ५ ॥
कश्चिच्छिष्यं गच्छ शिष्य मिथिलेशं वदाधुना ।
मद्वाक्यात् वेदशास्त्राभ्यां मुधा भ्रान्तोसि भूपते ॥ ६ ॥
निरीक्ष्य मम शास्त्राणि मत्पथानुगतो भव ।
अस्ति चेत् तव देशेऽस्मिन् वेदस्थापनकृत् पुमान् ॥ ७ ॥
तमानय मया सार्द्धं विचारं प्रकरोतु सः ।
तदा राजा तु श्रुत्वैतद्वचनं दूतभाषितम् ॥ ८ ॥
उवाच दूतं गच्छ त्वं स्वगुरुं ब्रूहि मे वचः ।
अहं भ्रान्तः स चेद् भ्रान्त इत्येवं निश्चयो महान् ॥ ९ ॥
आगच्छ सदसि प्रातः स ते व्यक्तिर्भविष्यति ।
इत्युक्तः स गतो दूतः प्राह सर्वं नृपोदितम् ॥ १० ॥
गुरवे स तु शृण्वन् वै जहासातिमदान्वितः ।
अथ राजा तत्क्षणात्तु देशस्थान् पण्डितान् बहून् ॥ ११ ॥
श्रीमदुदयनाचार्यमुख्यानानाय्य चोक्तवान् ।
अहोयं नास्तिको ग्रामे समायातोतिपण्डितः ॥ १२ ॥
अनेन विवदध्वं वै यूयं यदि स चेज्जयेत् ।
तदाहं च भवन्तश्च सर्वे तन्मतगामिनः ॥ १३ ॥
भविष्यामो न सन्देहो भवतां चेज्जयो भवेत् ।
तदाहं भवतां दास्यं करिष्यामि न संशयः ॥ १४ ॥
इत्युक्त्वास्ते तु विद्वांसः सर्वे तूष्णीं स्थिता अथ ।
श्रीमदुदयनाचार्यस्तेषां मध्येऽब्रवीन्नृपम् ॥ १५ ॥

सत्यमात्थ महाराज शृणु किञ्चिन्मयोदितम्।
जयः पराजयो वापि श्रीहरेरिच्छया नृणाम् ॥ १६॥
यथाशक्ति विवादं तु करिष्यामि न संशयः।
त्वं तु चिन्तां परित्यज्य पश्यास्माकं पराक्रमम् ॥ १७॥
इत्युक्त्वा नृपतिग्रामे तस्थुः सर्वेऽथ पण्डिताः।
द्वितीये दिवसे प्राप्ते राजा सदसि चागतः ॥ १८॥
आहूय पण्डितान् सर्वान् तं चापि जिनशास्त्रिणम्।
उवाच युवयोरस्तु विचारः पश्यतो मम ॥ १९॥
इति राजवचः श्रुत्वा नास्तिकः पूर्वमब्रवीत्।
अहो विचार उभयोः स नो भवितुमर्हति ॥ २०॥
नैते वै सत्पथारूढाः किं वदिष्यन्ति मामिह।
इति श्रुत्वा वचस्तस्य नास्तिकस्य दुरात्मनः ॥ २१॥
उवाचोदयनाचार्यो मतं तन्मतखण्डनम्।
एवं वहुदिनान्यासीद्विचारः सुमहाँस्तयोः ॥ २२॥
तदा बौद्धो हृदा मत्त्वाचार्यान्निजपराजयम्।
मायां विस्तारयामास महाश्चर्यप्रदायिनीम् ॥ २३॥
उवाच नृपतिं राजन् सर्वे ऽमी मद्विरोधिनः।
न कोपि मद्धितं ब्रूते तस्मादेकं वदाम्यहम् ॥ २४॥
शालग्रामशिलायां तु सत्यमेषां स्थितो हरिः।
तामानयात्र स्वमतैः खण्डयामि शिलामहम् ॥ २५॥
यदि सा जलवद् भूत्वा स्यादहश्या शिला पुनः।
तदा मदुक्तं सत्यं स्यादथ चेत् तां पुनः स तु ॥ २६॥
आचार्यो जलवत् कृत्वा शिलां व्यक्तां करिष्यति।
तदास्यापि मतं सत्यं मन्येऽहं नात्र संशयः ॥ २७॥
इत्युक्तः स नृपस्तेन बौद्धेनाथ महीपतिः।

ददर्शोदयनाचार्य किं वदत्येष नास्तिकः ॥ २८ ॥
इत्युक्तो भूमिपतिना प्राहाचार्योतिहृष्टवत् ।
इदं तु मायाचरितं तथापि स्वीकरोम्यहम् ॥ २९ ॥
मायामपि च जानामि परं त्वेकं ब्रवीम्यहम् ।
जातायां च पुनस्तस्यां शिलायां तन्मतद्वयम् ॥ ३० ॥
सत्यं चेति वदिष्यन्ति भ्रान्त्या सर्वे सभासदः ।
तस्मादेकमहं वक्ष्ये सत्यमिथ्याविचारणे ॥ ३१ ॥
तत्करिष्यत्ययं चेद्वै करिष्ये स्वोक्तमप्यहम् ।
इति श्रुत्वा ततो राजा जैनाचार्यं ददर्श ह ॥ ३२ ॥
ततो जैनः स्वयं प्राह करिष्याम्यस्य भाषितम् ।
* * * * * * * ॥ ३३ ॥
इति श्रुत्वा ततो राजा शालग्रामशिलां दृढाम् ।
आनाय्य स्थापयामास स्वर्णस्थाल्यां शुचौ भुवि ॥ ३४ ॥
ततो बौद्धो ऽब्रवीत् स्वीयं मतं दृष्ट्वा तु तां शिलाम् ।
अथ क्षणेन सा सर्वा शिला जलमभूत् तदा ॥ ३५ ॥
ततोर्द्धक्षणतस्तद्वै जलमन्तर्बभूव ह ।
पश्यतां सर्वलोकानां महाचर्यमभूदिदम् ॥ ३६ ॥
ततस्तूदयनाचार्यो बौद्धसिद्धान्तखण्डनम् ।
स्वमतं प्राह शीघ्रं तज्जलं प्रादुर्बभूव ह ॥ ३७ ॥
तत्क्षणेन च तद्वारि सा शिला समपद्यत ।
ततो राजादयः सर्वे साधुसाध्वितिवादिनः ॥ ३८ ॥
प्रशशंसुश्च तं भक्त्योदयनाचार्यमादरात् ।
आचार्यस्तु तदा प्राह कथमेषा स्तुतिर्मम ॥ ३९ ॥
स्थित एव मते ह्यस्य तस्मात् कुरु मदीरितम् ।
इत्युक्त्वा नास्तिकं प्राह मयाकारि तवेरितम् ॥ ४० ॥

अतः परं मतं कस्यं सत्यं मिथ्येति निश्चिनु ।
मया यदुच्यते तेन प्रकारेण नृपाग्रतः ॥ ४१ ॥
एष तालद्रुमो द्वारि तिष्ठत्यतिमहानहो ।
तमारुह्य पतिष्यावो यः स्थास्यति स सत्यवाक् ॥ ४
वेदाः प्रमाणमित्युक्त्वा निपतिष्याम्यहं भुवि ।
त्वं तु वेदा अप्रमाणमित्युक्त्वा निपताधुना ॥ ४३ ॥
युगपत् पततोर्वृक्षाज्जीविष्यति य आवयोः ।
स सत्यवाग्मतं तस्य सत्यं लोकस्तुतं भवेत् ॥ ४४ ॥
एवमाचार्यवचनं श्रुत्वा सोऽपि जहर्ष च ।
स्वीचकार ततो राजा तावुभावब्रवीद्वचः ॥ ४५ ॥
अहो प्राणान्तकी चेयं परीक्षा नैव शोभना ।
तस्माद्विरमतामत्र युवामेतद्विचारनः ॥ ४६ ॥
इति राजवचः श्रुत्वा उदयनाचार्य आहतम् ।
तव नास्त्यत्र किञ्चिद्धो दूषणं नैव घातकम् ॥ ४७ ॥
स्वशास्त्रभक्तितश्चावां करिष्यावो यथारुचि ।
त्वमेकस्मिन्मृते चास्मिन् मयि वा नृपसत्तम ॥ ४८ ॥
तन्मतं च परित्यज्य जीवन्मतपरो भव ।
किं च यावन्ति ते राज्ये पुस्तकानि च तानि वै ॥ ४
जले प्रक्षिप ये चैतच्छास्त्रोपासनकारकान् ।
तान् दण्डयित्वा यो जीवेदावयोस्तन्मतानुगान् ॥ ५
कुरुष्वेत्यस्मदुक्त्या वै प्रतिज्ञां कुरु भूपते ।
इत्युक्तो नृपतिर्जैनाचार्यस्य मुखमैच्छत ॥ ५१ ॥
एवमेवाब्रवीत् सोऽपि प्रतिजज्ञे नृपस्तदा ।
तत उत्थाय ते सर्वे आगतास्तालसन्निधौ ॥ ५२ ॥
वंशादिनाथ तौ द्वौ तमारुह्योच्चैर्महातरुम् ।

वेदाः प्रमाणमित्युक्त्वा आचार्यो न्यपतद् भुवि ॥ ५३ ॥
बौद्धो वेदा अप्रमाणमित्युक्त्वा निपपात ह ।
आचार्यो निपतन्भूमौ वेदैः संरक्षितः सुखम् ॥ ५४ ॥
मन्दंमन्दं समागत्य तस्थौ वेदं हरिं स्मरन् ।
जैनाचार्यः पतन्मार्गे भ्राम्यमाण उपर्यधः ॥ ५५ ॥
परिवर्तितशीर्षो हि पपात धरणीतले ।
व्यस्तमस्तकत्वाव्हङ्घ्रिर्निष्प्राणो न्यपतत् खलु ॥ ५६ ॥
इति दृष्ट्वा महाश्चर्यं सर्वे राजादयो जनाः ।
आचार्यं प्रशशंसुस्ते नमस्कृत्य मुहुर्मुहुः ॥ ५७ ॥
ततो राजा वेदशास्त्रं सत्यं मत्वातिभक्तितः ।
स्वराज्ये स्थापयामास तदाचारपरः स्वयम् ॥ ५८ ॥
भूत्वा चकार राज्यं स सर्वधर्मसमन्वितः ।
नास्तिकस्य च यान्यासन् शास्त्राणि पृथिवीतले ॥ ५९ ॥
तानि सर्वाणि चिक्षेप जले ये तदुपासकाः ।
तान् सर्वान् दण्डयित्वा स चकारास्तिकसंमतान् ॥ ६० ॥
श्रीमदुदयनाचार्यं चक्रे राजगुरुं नृपः ।
जीविकार्थै ददौ ग्रामान् स्वयमाज्ञापरोऽभवत् ॥ ६१ ॥
एकदोदयनाचार्यो जगन्नाथदिदृक्षया ।
पुरुषोत्तमपुरे गत्वा स्नात्वा तत्तीर्थवारिणा ॥ ६२ ॥
मार्कण्डेयह्रदाद्येन मन्दिरद्वारमागतः ।
देवं द्रष्टुं मन्दिरान्तः प्रवेष्टुं चलितो यदा ॥ ६३ ॥
तदा कपाटः संलग्नः स्वयमेव निरीक्ष्य सः ।
द्वारान्तरमुपायातस्तदाप्येवं बभूव ह ॥ ६४ ॥
अथ तृतीये द्वारे तु संप्राप्तः स यदा द्विजः ।
तत्रापि स कपाटस्तु स्वयं लग्नः पुनश्च सः ॥ ६५ ॥

चतुर्थं द्वारमागत्य मन्दिरं गन्तुमुद्यतः ।
तमप्यपश्यत् संलग्नं कपाटं ह्ययमत्र हि ॥ ६६ ॥
इति कौतुकमेतत् तु पश्यन्तस्ते जनाः स्थिताः ।
तदा तूदयनाचार्यः सस्मितं वाक्यमब्रवीत् ॥ ६७ ॥
जगन्नाथ सुरश्रेष्ठ भक्त्यहङ्कारपूर्वकम् ।
ऐश्वर्यमदमत्तोसि मामवज्ञाय वर्त्तसे ॥ ६८ ॥
उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ।
इत्येवमुक्ते श्लोके तु सहसोद्घाटिताः स्वयम् ॥ ६९
कपाटास्तत्क्षणादेव नृणां चित्रं तु पश्यताम् ।
ततस्तत्र स्थिता येषु जगन्नाथस्य पूजकाः ॥ ७० ॥
ते सर्वे विनयात् तं तु गृहीत्वाचार्यमादृताः ।
नीत्वाथ मन्दिरे देवं दर्शयन्ति स्म हर्षिताः ॥ ७१ ॥
सोऽपि दृष्ट्वा जगन्नाथं संपूज्य स्तुतिभिर्मुहुः ।
स्तुत्वा जप्त्वा समभ्येत्य बहिर्दत्वा धनानि च ॥ ७२
उषित्वा कतिचिद्रात्रीः समायातुमथोद्यतः ।
अथ स्वप्ने जगन्नाथः पूजकब्राह्मणान् स्वयम् ॥ ७३ ॥
उवाच मम यच्चास्ति पीताम्बरमनुत्तमम् ।
तद्देह्युदयनाचार्यायाशु सोऽतीव मे प्रियः ॥ ७४ ॥
ममैवांशो न सन्देहो ऽनेनैव स्थापितोऽस्म्यहम् ।
तिरस्कृतो महामूढबौद्धसिद्धान्तवादिभिः ॥ ७५ ॥
इति दृष्ट्वा तु ते स्वप्नं पूजकाः प्रातरुत्थिताः ।
परस्परं स्वप्नमध्ये मन्त्रयित्वातिभक्तितः ॥ ७६ ॥
पीताम्बरं समानीय जगन्नाथाज्ञया ददौ ।
आचार्याय ततः सोऽपि धृत्वा तन्निजमस्तके ॥ ७७
प्रणनाम मुहुर्देवं जगन्नाथं मुदा द्विजः ।

एवं ततो जगन्नाथप्रसादं प्राप्य स द्विजः ॥ ७८ ॥
मिथिलामाजगामाशु निजमन्दिरमुत्तमम् ।
तत्र शिष्योपशिष्यैश्च सेवितः परमादरात् ॥ ७९ ॥
अध्यापयामास मुहुः सर्वशास्त्राणि यत्नतः ।
अधीत्य तस्मादाचार्याद्वेदशास्त्राणि सर्वशः ॥ ८० ॥
धर्मं संस्थापयामासुर्देशेदेशेतिपण्डिताः ।
अद्यापि मिथिलायां तु तदन्वयभवा द्विजाः ॥ ८१ ॥
विद्वांसः शास्त्रसम्पन्नाः पाठयन्ति गृहेगृहे ।
स तु कालेन महता वृद्धो भूत्वा जरातुरः ॥ ८२ ॥
काशीमागत्य कतिचित् स्थित्वा तत्र दिनानि च ।
मणिकर्ण्यां ब्रह्मनाले प्राणांस्तत्याज लीलया ॥ ८३ ॥
प्रातः पुरातनं देहं वैष्णवं सुरदुर्लभम् ।
एवं सोदयनाचार्यो बभूव पृथिवीतले ॥ ८४ ॥
धर्मसंस्थापनार्थाय नास्तिकानां निवृत्तये ।
शृण्वन् चरितमेतस्य नरो बुद्ध्या महीयते ॥ ८५ ॥

इति भविष्यपुराणपरिशिष्टे उदयनाचार्यचरितं नाम
त्रिंशोऽध्यायः ॥ ३० ॥

इत्थं स्थूलेन प्रकारेणोदयनाचार्याणां देशकालस्थितीनां निर्णयो भवति सूक्ष्मेन प्रकारेण तु तत्कृतलक्षणावलीग्रन्थान्तस्थेन श्लोकेन

"तर्काम्बराङ्कप्रमितेष्वतीतेषु ९०६ शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

इत्यनेन ९०६ शाकवर्षे तेषां स्थितिरासीदिति नि-

ष्पन्नं भवति । शकान्तत इत्युक्त्या शाकवर्ष एव ग्राह्यो
क्तमत्रैव भूमिकायां १०४ पृ. सिद्धान्तशिरोमणिगणिता
यस्थं भास्कराचार्यवाक्यम्

"शकनृपस्यान्ते कलेर्वत्सराः ।" इत्यादि ।

अस्मन्निकटे तार्किकरक्षाटीकाया ज्ञानपूर्णकृताया
स्तकं १३२४ शाकवर्षे लिखितं वर्तते । टीकाग्रन्थे च
दयनाचार्यस्य नाम समुद्धृतम् । ज्ञानपूर्णश्च विष्णुस्वा
शिष्यः । अपि च ११९९ विक्रमवर्षे १०६४ शाकवर्षे
मारपालस्य राज्ञो राज्याभिषेकोऽभूत् तस्मिन्नेव
मध्वाचार्य आसीदिति आर्यविद्यासुधाकरे निरूपितम्
चार्यात्पूर्वं विष्णुस्वाम्यासीदिति भगवद्भक्तमाहात्म्ये
अध्याये निरूपितमित्यनेन ९०६ शाकाब्दे उदयना
स्थितिर्न विरुद्धा ।

अपि च ११६४ शाकाब्दे लिखिता नैषधटी
का नेपालदेशे वर्तत इति तत्रत्यलिखितपुस्तकसूचीपत्रे
कायां ३२ पृ० निरूपितम् ।

अन्यच्च

"युग्माश्वाङ्कैर्निरुक्ते ९७२ शकनृपतिसमे कान्यकुब्जेश्वरा
आदेशं प्राप्य यत्नान्नलचरितमहाकाव्यटीकां व्यधत्त ।
सूरिर्भूदेवसञ्ज्ञो दिनमणितनयः कूर्मपूर्वागजन्मा
तुष्याव तेनान्तरात्मा त्रिभुवनजनकोमापतिश्रीमहेशः ॥"

इत्युक्तनैषधचरितटीकाभ्यां ९७२ शाकवर्षेभ्यः
नैषधचरितकर्तुः श्रीहर्षस्य स्थितौ सत्यामेव खण्डन
खाद्यग्रन्थे "शङ्का चेदनुमास्त्येव" त्यादिकुसुमाञ्जलि
कोद्धारे ९०६ शाकाब्दे उदयनाचार्यस्थितौ

ञ्चसं किमपि(१) ।

(१) अत्रान्येषामैतिहासिकानां मतानि वर्तन्ते । "श्रीहर्षकविः श्रीहीरपण्डितात् मामल्लदेव्यां समजनि । पूर्वस्यां वाराणस्यां(१) पुरि गोविन्दचन्द्रो नाम राजा तत्पुत्रो विजयचन्द्रः तत्पुत्रो जयन्तचन्द्रः जयन्तचन्द्रस्य पुत्रो मेघचन्द्रः तस्य राज्ञो बहवो विद्वांसः तत्रैको हीरनामा विप्रः तस्य नन्दनः श्रीहर्षः सोऽपि बालावस्थः सभायां राजकीयेनैकेन पण्डितेन वादिना हीरो राजसमक्षं जित्वा मुद्रितवदनः कृतः ।

इत्यादि सर्वं राजशेखरसूरिणा १३४८ खीष्टाब्दे विरचिते प्रबन्धकोशे श्रीहर्षविद्याधरजयन्तचन्द्रप्रबन्धात् गौडदेशीय इत्यवगम्यते ।

प्राचीनलेखमालायां २३ लेखे सं० १२४३, २२ लेखे जयच्चन्द्रयौवराज्यदानपत्रे सं० १२२५ लिखितः इत्थं च जयन्तचन्द्रस्य द्वादशखीष्टशतके स्थितिनिश्चयान्नैषधीयचरितकर्त्तुः श्रीहर्षस्यापि तदैव स्थितिर्निश्चिता । अत एव जयन्तचन्द्रपितृविजयचन्द्रवर्णनात्मकमेव विजयप्रशस्तिरचनातातस्य इति पञ्चमसर्गसमाप्तिश्लोक्ते स्वकीयविशेषणध्वनितविजयप्रशस्तिनामकं काव्यं भवेत् । अस्मिँश्च विषये बहूनां विसंवादं प्रदर्श्य तत्खण्डनपूर्विका डाक्तरबुलरसंमतिरपि तथाहि तदीयं रायल् एशियाटिक् सासाइटी बांबे ब्रांच इति नामभूषितविद्वत्सभया १८७५ खीष्टाब्दे प्रकाशिते प्रबोधनग्रन्थे पृ० २७९–२८७ मुद्रितं व्याख्यानम् ।

अयं जयन्तचन्द्रो जयचन्द्र एव यः किल राठौरवंशीयानां कान्यकुब्जाधिपानामन्तिमो वाराणस्यधिपतिर्बभूव यं च खीष्टस्य ११९५ वर्षे यवना राज्यात् प्रसह्य प्रभ्रंशयांचक्रुः ।

श्रीमान् काशीनाथत्र्यम्बकसूनुस्तैलङ्गः कुसुमाञ्जलिकर्तुरुद-

(१) कान्यकुब्जेश्वरत्वेपि काश्यादितीर्थाधिपतित्वमपि तदीयताम्रपत्रादवगम्यते । किं तु ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरादित्यनेनात्र विजयचन्द्र एव ग्राह्य इत्यत्र प्रमाणं राजशेखर एव जानाति ।

उदयनाचार्येण न्यायवार्त्तिकतात्पर्यपरिशुद्धौ २ ध्याये २ आह्निके "प्रपञ्चितोऽस्माभिस्तु न्यायकुसुमाञ्ज विति" इति।

तत्रैव ३ अ. १ आ. "विद्यासन्ध्योदयोद्रेका"दित्य

यनाचार्यस्य समयं(१) निरूपयन् प्रसङ्गतः श्रीहर्षस्यापि विवेकमन्वबध्नात् तत्रादर्शयत् श्रीहर्षः खीष्टस्य नवम्यां दश वा शताब्द्यां बभूव न तु द्वादश्याम्।

अहमदाबादसमीपे ढोलकाग्रामे चाण्डुपण्डितेन १३५ वत्सरे(२) नैषधटीका व्यरचि। तत्रैवं दृश्यते पङ्क्तिः "प्रथमं त्कविर्जिगीषुकथायां स्वपितृपरिभावुकमुदयनमत्यमर्षणतया क्षयंस्तद्ग्रन्थीनुद्ग्रन्थयितुं खण्डनं प्रारिप्सुः" इत्यादि

केचित्तु "विजयप्रशस्तिरचनातातस्य" इति नैषधं पञ्चमसर्गान्तश्लोकदर्शनात् "ताम्बूलद्वयमासनं च लभते कान्यकुब्जेश्वरा"दित्यादिदर्शनाच्च ताम्रपत्रोपात्तस्य कान्यकु धिपतेर्विजयचन्द्रदेवस्य संवत् १२२५ वर्षे जयच्चन्द्राय यौव दत्तवत उक्तसमयात्पूर्वं स्थायी कान्यकुब्जश्च श्रीहर्ष वदन्ति तत्तुच्छम् "गौडोर्वीशकुलप्रशस्तिभणिती"ति ७ स दर्शनात् वङ्गदेशीयोऽपि सम्भवति। विजयचन्द्रनाम्नैव तत्स वस्थायी चेत् इण्डियन् अण्टिक्वेरीसञ्ज्ञके पत्रे सन् १८८६ समुद्रिते पृष्ठे १४१ मुद्रिते ताम्रपत्रे श्रीहर्षेण प्रयुक्तस्य शा स्थिरायतेः इतिदर्शनात् तात्कालिकोऽपि श्रीहर्षो भवेत् त पत्रं तु ७९४ खीष्टाब्दे लिखितमिति॥"

(१) इण्डियन् अण्टिक्वेरी प्रथमपुस्तके २९७ पृ० ३ द्वितीयपुस्तके ७१ पृ० च।

(२) तदीयसमाप्तौ श्लोकः

श्रीविक्रमार्कसमयाच्छरदामथत्रि-
पञ्चाशता समधिकेष्वितेषु ?।
तेषु त्रयोदशसु भाद्रपदे च शुक्ल-
पक्षे त्रयोदशतिथौ रविवासरे च॥

पद्यं लिखितम् इदमेव पद्यं किरणावल्यामारम्भे ऽपि ।

अपि च "अपसिद्धान्तस्तु यथा विरोधाद्भिद्यते तथा तत्रैव वक्ष्यते । शेषं परिशिष्टे ।" इति ।

किरणावल्यां "विस्तरस्तु न्यायकुसुमाञ्जलावात्मतत्त्ववि-वेके चानुसन्धेयः ।" इति ।

तात्पर्यपरिशुद्धि-किरणावल्युक्तमेव "विद्यासन्ध्योदयोद्रे-का"दित्यादिपद्यं लक्षणावल्याम् ।

प्रबोधसिद्धिर्बोधसिद्धिर्बोधशुद्धिर्न्यायपरिशिष्टं चेत्येकस्यैव ग्रन्थस्य नामभेदा इति वरदराजाचार्येण तार्किकरक्षायां ३१० पृ. निरूपितमिति उक्तस्य निबन्धषट्कस्यैककर्तृकत्वं निर्विवादम् ।

त्रिदण्डिवेदान्तिनो वदन्ति उदयनाचार्याणामात्मतत्त्ववि-वेके ऽन्ते "अत एव त्रिदण्डिवेदान्तिमतोपसंहार" इत्याद्युक्त्या प्रपन्नामृतग्रन्थेन १०१२ शाकाब्दे रामानुजाचार्याणां स्थिति-सिद्धौ तत एव त्रिदण्डिवेदान्तिमतप्रचारात् तत्कालपूर्ववर्त्तित्वा-सम्भवाल्लक्षणावल्युक्त ९०६ शाकाब्दे उदयनाचार्याणां स्थिति-र्न सम्भवतीति । तन्न रामानुजाचार्येभ्योऽपि बहुपूर्ववर्तिन-ष्टङ्क-द्रमिण-गुहदेव-भारुच्यादयोऽपि विशिष्टाद्वैतवादिन एक-दण्डी त्रिदण्डी वेति मनुस्मरणात् त्रिदण्डिवेदान्तिमतस्यापि चि-रन्तनत्वादिति ।

अपि च सुरेश्वराचार्येण बृहदारण्यकवार्त्तिके ५ ब्राह्मणे ३ अध्याये "सत्रिदण्डवदि"त्युक्तत्वात् शङ्कराचार्याणामपि समये त्रिदण्डिमतसत्त्वात् शङ्कराचार्यात् पश्चात्कालवर्त्तिनो वाचस्प-तिमिश्रस्य पश्चात् कालवर्त्तिन उदयनाचार्यस्य त्रिदण्डिमतो-पन्यासे नासमञ्जसं किमपि । सम्प्रदायधूर्वहत्वेन रामानुजाचार्य-परत्वे तत्राग्रहश्चेत् तदा क्लिष्टकल्पनया निर्वाहो भवितुमर्हति तथा

हि १०१२ शाकाब्दोऽन्त्यसमयो १२० वर्षपरिमितपरमा
रामानुजाचार्याणां ८९२ शाकाब्दे जन्मासिद्धौ लक्ष्म
ल्युक्त ९०६ शाकाब्दात् परमपि उदयनाचार्याणां वि
सम्भवादिति ।

यच्चोक्तं पञ्चरत्ने ।

"ख्यातो गोवर्द्धनाचार्य उमापतिधरस्तथा ।
शरणो जयदेवश्च धोयी कविनृपः क्रमात् ॥
राज्ञो लक्ष्मणसेनस्य पञ्चरत्नानि संसदि ॥" इति ।

गोवर्धनाचार्येण शृङ्गारसप्तशत्यामन्ते ।

"उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥

अत्रोदयन उदयनाचार्य इति व्यङ्ग्यार्थसन्दीपनाख्ये
शतीव्याख्याने आनन्दपण्डितेन व्याख्यातम् ।

एतेन उदयनाचार्यो लक्ष्मणसेनस्य राज्ञः सभायाम
दिति निष्पन्नम् । लक्ष्मणसेनश्चातिप्रसिद्धो राजाभूदिति त
त्सरश्च ल० सं० इत्याकारेण मिथिलादेशीयलिखितपुस्तका
दृश्यते तत्संवत्सरप्रवृत्तिकालविषये उक्तं गणकैर्देशभाषया
"शाके सो सन् जानब सोई । रहित वाणशशिवाण ५१५ जो
जासन् जमा रहै सो देखहु । शरशशिवाण ५१५ हीन कर लं
बाकी रहै सो ल० सं० प्रमान । गुरु ज्ञानीजन भाषाभान
अरु चौषट् एकादश दीजै । ल० सं० सहित संवत् करलीज॥"

इत्यनेन १०२९ शाकाब्दे लक्ष्मणसेनसंवत्सरप्रवृत्तिः स
वति । अथ च "मैथिलकोकिलविद्यापति"नामके पुस्तके ११
समुद्धृते दानपत्रे ल० सं० २९३ शाके १३२१ इति लि
त्वात् स एव समयः समायाति । किन्तु वल्लालसेनकृत

सागरे ग्रन्थनिर्माणकालः १०८९ शाकाब्दो लिखितस्तत्र लक्ष्मणसेनस्यापि नाम वर्तत इति ६० वर्षपरिमितकालान्तरे लक्ष्मणसेनवल्लालसेनयोः स्थितेर्नासम्भवः परन्तु लक्ष्मणसेन एव पूर्वपुरुषः आनन्दभट्टेन वल्लालसेनचरिते वल्लालसेनस्य पुत्रो लक्ष्मणसेन इति प्रतिपादितं तत्र लक्ष्मणसेन इत्यत्र लवणसेन इति पुस्तकान्तरे पाठदर्शनात् लक्ष्मणसेनश्च पूर्वपुरुष इत्यत्र नासमञ्जसं किमपि ।

तथा च लक्षणावल्युक्त ९०६ शाकाब्दे वर्तमान उदयनाचार्यः १०२९ शाकाब्दासन्ने समये वा १०२९ शाकाब्दात् परं १०८९ शाकाब्दात् पूर्वं ६० वर्षाभ्यन्तरेऽपि आसीदित्यसम्भवाल्लक्ष्मणसेनसंसदि वर्तमानो गोवर्धनाचार्यस्य भ्राता भिन्न एवोदयनाचार्य इति ।

एवं गोवर्धनाचार्यस्य भ्राता बलभद्रोऽपि भिन्नः पद्मनाभमिश्रस्य पिता बलभद्रो भिन्न एव अनेन किरणावलीभास्करे वर्द्धमानोपाध्यायस्य नाम समुद्धृतमिति प्रतिपादितमस्यामेव भूमिकायां १२ पृष्ठे ।

एवं गीतगोविन्दटीकाकार उदयनाचार्यः कश्चिदन्य एव गीतगोविन्दकर्तुर्जयदेवस्य रजनीकान्तगुप्तमहाशयेन १३०० शाकाब्दे पण्डितपत्रमुद्रितप्रसन्नराघवनाटकभूमिकायां पण्डितगोविन्ददेवशास्त्रिणा च स्थितेर्निर्द्धारणात् गीतगोविन्दटीकाकर्तुः तत्पश्चात्कालभावित्वात् ।

अपरोऽपि वत्सराजापरनामधेय उदयनः सुतरां भिन्नस्तत्कथा च विष्णुपुराणे ४ अंशे २१ अध्याये कथासरित्सागरेऽपि निरूपिता इति ॥

---

## न्यायनिबन्धप्रकाशकर्तुः श्रीवर्द्धमानोपाध्यायस्य चरितम् ।

---

वर्द्धमाननामानोऽपि अनेके पण्डिता अभूवन् प न्यायनिबन्धप्रकाशकर्ता एवेदानीं प्राधान्येन निरूपणीः तथाहि न्यायनिबन्धप्रकाशान्ते

"यस्तर्कतन्त्रशतपत्रसहस्ररश्मि-
र्गङ्गेश्वरः सुकविकैरवकाननेन्दुः ।
तस्मात्मजः पितुरधीत्य निबन्धमित्थं
प्राकाशयत् कृतिमुदे बुधवर्द्धमानः ॥" इति

कुसुमाञ्जलिप्रकाशादावपि

"न्यायाम्भोजपतङ्गाय मीमांसापारदर्शिने ।
गङ्गेश्वराय गुरवे पित्रे ऽत्रभवते नमः ॥" इति

तत्त्वचिन्तामणौ च

"गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणि

एतावता निष्पन्नं भवति दिगन्तविश्रान्तकीर्तेस्तत्त्व न्तामण्यादिकर्तुः श्रीगङ्गेशोपाध्यायस्य पुत्रः शिष्यश्च व नोपाध्याय इति । गङ्गेशोपाध्यायश्च कस्मिन् देशे कस्मिन् आविरभूदितीदानींपर्यन्तं तदीयोपलब्धेषु ग्रन्थेषु नोप ते किन्तु तत्त्वचिन्तामणावनुमानपरिच्छेदे "इति ख कारमतमपास्त"मित्युक्त्या श्रीहर्षसमयात् पश्चादक वी १२९३ शाकाब्दे सुधामधुनिबन्धकर्त्रा वाचस्पति तत्त्वचिन्तामणिग्रन्थस्य व्याख्यातत्वादुक्तशाकाब्दपूर्व भावीति नात्र सन्देहः ।

अपि च १४०० ईशवीयवर्षे १३२२ शाकाब्दे वर्तमानस्य मैथिलकोकिलविद्यापतेः पक्षधरमिश्रापरपर्यायस्य तदत्र-चिन्तामण्यालोककारस्य जयदेवमिश्रस्य पितृव्याद्धरिमिश्राद्विद्यासम्पादनं तमेत्र समयं द्रढयति ।

अपि च मिथिलादेशाधिपतेर्महेशठक्कुरस्य भ्राता मेघठाकुरापरपर्यायो भगीरथठक्कुरो विंशाब्दवयस्को जयदेवमिश्रात् संपूर्णं न्यायशास्त्रमधीतवानिति तत्कृतकिरणावलीप्रकाशप्रकाशिकाग्रन्थादवगम्यते तथाहि

"यः कैशोरे विश्वविख्यातकर्मा
धर्माचार्यः श्रीमहादेवशर्मा ।
तत्सोदर्यो वर्द्धमानस्य सूक्तौ
भावं मेघः सम्यगाविष्करोति ॥"

"विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः ।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज–
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः ॥"

अन्यच्च

आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो
जातः खण्डवलाकुले गिरिसुताभक्तो महेशः कृती ।
शाके रन्ध्रतुरङ्गमश्रुतिमहीसंलक्षिते १४७८ हायने
वाग्देवीकृपयाऽथ येन मिथिलादेशः समस्तोऽर्जितः ॥

पद्यमिदं मिथिलायां जनकपुरस्थानात् पञ्चक्रोशान्तर ईशानभागे धनुःषक्षेत्रे (धनुखा) कूपे प्रस्तरपट्टे लिखितमस्ति ।

तत्रान्यान्यपि पद्यानि सन्ति ।

इत्यनेन १४७८ शाकाब्दे विद्याविभवसम्पन्नेन मह- क्कुरेण वृद्धावस्थायां मिथिलाराज्यं प्राप्तम् तथा च भग- ठक्कुरेण २० वर्षवयस्केन वृद्धादेव जयदेवपण्डितकवेः यशास्त्रमधीतमिति १३७८ शाकाब्देऽपि जयदेवस्थिति सम्भवतीति १२९३ शाकाब्दादपि पूर्वकालभावी गं पाध्याय इति नासम्भवी तस्मिन्नेव काले वर्द्धमानोपाध्या ऽप्यासीदिति ।

पाँजीपुस्तकाल्लोकप्रसिद्ध्या च वर्द्धमानोपाध्यायो थिल एव अनेनैव न्यायवार्त्तिकतात्पर्यपरिशुद्धिप्र परपर्यायन्यायनिबन्धप्रकाश—न्यायपरिशिष्टप्रकाश—नं नयतत्त्वबोधादयो ग्रन्था रचिता इति प्रतिपादितप्र त् । तत्पित्रा लोकोत्तरविद्याविभवबुद्धिशालिना मह लपेन श्रीगङ्गेशोपाध्यायेनैतादृशस्तत्त्वचिन्तामणिन्यायमहा न्थो रचितो यद् वर्द्धमानोपाध्याय—पक्षधरमिश्र—हरि गोकुलनाथोपाध्याय—मधुसूदनमिश्र—प्रभृतिभिर्मैथिला

---

(१) कुसुमाञ्जलिभूमिकायां ११८९ शाकाब्दे जयदेवं संस्थाप्य "शाके मुनिव्योमयुगेन्दुगण्ये १४०७ " इति चैतन्य न्मव्यवस्थापकपद्यस्थं युगशब्दं चैतन्यचन्द्रोदयनाटकस्थं के चतुर्दशशते रविवाजियुक्ते १४०७" इतिपद्येन च दृढीकृत्य रघुनाथशिरोमणिचैतन्यदेवयोरेककालावस्थानं शिरोमणिजयदेवमिश्रयोः संवादं खण्डयन्ति । तत्तुच्छम् लक्ष्मणसेनवर्षे १४१५ शाकाब्दे वर्त्तमानेन रुचिदत्तेन "अयं चिदत्तेन जयदेवाज्जगद्गुरोः"इत्युक्तेः १३२२ शाकाब्दे वर्त्तमा यदेवपितृव्याद्धरिमिश्रान्मैथिलकोकिलविद्यापतेरध्ययनस्य

वासुदेवसार्वभौम–रघुनाथतार्किकशिरोमणि–मथुरानाथ–भवान-न्द–जगदीश–गदाधर–चन्द्रनारायण–कालीशङ्करप्रभृतिभिर्वङ्ग-देशीयैः पण्डितैर्महादेव–कृष्णम्भट्ट–राघवेन्द्राचार्यादिभिर्दाक्षि-णात्यपण्डितैश्च साक्षात् परम्परया वा व्याख्यातत्वात् क्रोडप-त्रादिना च संवलितत्वात् श्लोकानां लक्षाणामष्टाविंशत्या उपबृंहित इदानीं नवीनन्यायत्वेन लोके व्यवह्रियते इत्यादि प्रतिपादितमस्माभिर्वाराणसीमुद्रिते चौखंबासंस्कृतसीरीजपुस्तके क्रोडपत्रसंग्रहे भूमिकायां १ । २ । ३ खण्डेषु । किं तु नवी-नत्वव्यवहारः शास्त्रतात्पर्यानवबोधात् गङ्गेशोपाध्यायेन तत्त्व-चिन्तामणिग्रन्थे आदावेव "प्रत्यक्षानुमानोपमानशब्दाः प्रमा-णानी"ति गोतमसूत्रमवलम्ब्य "प्रमाणतत्त्वं विविच्यत" इ-त्यादिना तत्त्वचिन्तामणिग्रन्थो रचित इति न नवीनत्वं किमपि। यत्तु अवच्छेदकावच्छिन्नशब्दादिभिर्व्याख्यातत्वेन नवीन-त्वसाधनं तदपि शास्त्रतात्पर्यानवबोधादेव । पातञ्जलदर्श-ने समाधिपादे २६ सूत्रं "पूर्वेषामपि गुरुः कालेनाऽन-वच्छेदात्" । अत्र व्यासभाष्यम् "पूर्वे हि गुरवः का-लेनाऽवच्छेद्यन्ते यत्रावच्छेदार्थेन कालो नोपावर्तते" इति । अत्र भाष्यटीकायां वाचस्पतिमिश्राः "व्याचष्टे पूर्वे हि इति । कालस्तु शतवर्षादिः अवच्छेदार्थेन अवच्छेदेन प्रयोजनेन नोपावर्तते । " इत्यादिदर्शनादिति ।

गङ्गेशोपाध्यायादिनैयायिकानामुक्तानां चरितानि सप्रमा-णानि श्रीमता वाराणसीस्थराजकीयसंस्कृतपाठशालीयसरस्वती-भवनस्थपुस्तकप्रधानाध्यक्षेण श्रीगोपीनाथकविराज–एम्. ए. महाशयेन सङ्गृहीतानि तानि शीघ्रमेव प्रकाशितानि भवि-ष्यन्तीति मयात्रोपरम्यत इति ।

तत्त्वचिन्तामण्यादिनिबन्धानामाधारभूतं तदिदं न्या-
यवार्त्तिकमेशिआटिक्सोसाइटीवङ्गालसभानिदेशेन मत्संशोध-
पूर्वकं प्रथमं मुद्रितमिदानींपर्यन्तं न्यायदर्शनानुरागिभिर्नि
सर्वाणि तन्मुद्रितपुस्तकानि गृहीतानि उपयोजितानि च त
त्कार्येष्विति मया सहर्षं पुनरपि चौखंबाबुक्डिपोसम्पादक
हरिदासात्मजसेठजयकृष्णदासप्रार्थनया मुद्रितम् । भूमिका
यमेशियाटिक्सोसाइटीवङ्गालसभाद्वारैव प्रथमं मुद्रायितुमा
किन्तु विलम्बमसहमानैरत्यर्थं भृशं नोदितोऽहमेनां मुद्रितवा
इदानीं रोगार्तत्वादनवहितचेतसो मम दृष्टिदोषेण च ज
अशुद्धीः क्षाम्यन्तु दयापरा विद्वांसः सफलयन्तु माम
परिश्रममिति भूयो भूय एव परमेश्वरं प्रार्थय इति शम् ॥

सरस्वतीभवन
गवर्नमेण्टसंस्कृतकालेज
बनारस
२९ दिसम्बरमासे
१९१६ इसवीये वर्षे

विन्ध्येश्वरीप्रसादद्वि

॥ श्रीः ॥

भूमिकेयं मुद्रितशुद्धिपत्त्रसंयोगेन पठनीया किं तु यासामशुद्धीनां दर्शनमात्रादेव बोधो भवति तासां नात्र समावेशः कृतः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २१ | Fitzdward | Fitz Edward |
| ७ | २३ | ॥ ३०० । | ३६०० |
| १६ | २१ | भाषने | भाषते |
| १६ | २५ | दृश्श्यमाने | दृश्यमाने |
| २७ | ७ | वदौन्तिकार्थः | वैदान्तिकार्थः । |
| २८ | २ | चतसृणां | चतसृणां |
| ३० | १ | रम्भाँश्च | रम्भाँश्च |
| ” | ” | ममुः | मनुः |
| ३५ | २५ | पूर्व काला | पूर्वकाला |
| ३५ | २६ | भावःषड्विधः | भावः षड्विधः |
| ३६ | २३ | सिद्धान्तः | सिद्धान्त- |
| ३९ | ३० | आध्यायेषु | अध्यायेषु |
| ४० | २० | चतुःषष्टि | चतुःषष्टिं |
| ४५ | ३ | सानुद्वेष्टि | नानुद्वेष्टि |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४५ | ५ | संम्राड् | सम्राट् |
| ४६ | १७ | अहोऽनु | अहो अनु |
| ४९ | ६ | नीतिसु | नीतिषु |
| ४९ | ७ | चन्द्रिकानां | चन्द्रिकाणां |
| ४९ | १८ | शविषाणा | शशविषाण |
| ५४ | ६ | स्थाप्य | संस्थाप्य |
| ६२ | ११ | तिमि | मिति |
| ६३ | २ | निष्यन्नं | निष्पन्नं |
| ६३ | ५ | न्यासूत्र | न्यायसूत्र |
| ६३ | १३ | कृत्ताः | कृताः |
| ६३ | २१ | सम यस्य | समयस्य |
| ६३ | २५ | Travcls | Travels |
| ६६ | १० | शेवधीष्टे(?) | शेवधिष्टे(?) |
| ६८ | ५ | सदसच्चेनि | सदसच्चेति |
| ६८ | ६ | उपारम्भाब्धि | उपारम्भाब्धि |
| ६८ | २२ | जैनदर्शने | जैननिबन्धो-द्धृतसं |
| ७० | १२ | जैनागमेषु | जैननिबन्धो-द्धृतसं |
| ७० | १६ | तिरष्कृत | तिरस्कृत |
| ७२ | १५ | यथा यथं | यथायथं |
| ७७ | १५ | भ्राम्यल्लोको | भ्राम्यँल्लोको |
| ७८ | १२ | रम्भत् | रम्भात् |
| ८१ | २४ | नप्येक | नाप्येक |

# शुद्धिपत्त्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८४ | १६ | एनूसैंट | एनूशेंट |
| ८५ | २ | वत्सपुत्रस्य | (वत्सपुत्रस्य) वात्से पुत्रस्य |
| ८७ | १ | समज्जस | समञ्जस |
| ९० | १२ | निर्वाणत्वं | निर्वाणं |
| ९१ | ११ | शताब्धां | शताब्द्यां |
| ९४ | ११ | अवनीपत्तिः | अवनीपतिः |
| ९७ | ३ | तत्पश्चात्काल | तत्पूर्वकाल |
| ९७ | २७ | सप्तमन्वन्तराणि | सप्त मन्वन्तराणि |
| १०७ | २५ | रस्मौ | रश्मौ |
| १०८ | २६ | रङ्गिराव्यासो | रङ्गिरा व्यासो |
| ११२ | ६ | दक्षाद्याः | दक्षाद्या |
| ११४ | २२ | चत्तुर्थ | चतुर्थ |
| ११४ | २३ | बुक्डीपो | बुक्डिपो |
| ११७ | १७ | निर्वाणत्वं | निर्वाणं |
| ११८ | ६ | जैना गमे | जैनागमे |
| १२० | १ | न्यायवीद्या | न्यायविद्या |
| १२१ | १६ | सन्तनु | शन्तनु |
| १२१ | २५ | रीरिता | रीरिताः |
| १२२ | २४ | णाङ्काः | णाङ्का |
| १२९ | १२ | वृतिः | वृत्तिः |
| १३२ | २२ | क्षमेथाः | क्षमेथा |
| १३४ | २२ | पाठेऽयं | पाठोऽयं |
| १३६ | २४ | इच्छामि | इच्छामि |

| | | | |
|---|---|---|---|
| १३८ | २९ | चरितम् । रचित | चरितं र |
| १३९ | ८ | रचिता | रचिताः |
| १२९ | २४ | अन्वेषकं मन्याः | अन्वेषकं |
| १४० | २१ | शुकेशाः | सुकेशाः |
| १४५ | ११ | परिशुद्धि | परिशुद्धि |
| १५० | २४ | षडदर्शन | षड्दर्शन |
| १५४ | ३ | विदादं | विवादं |
| १५४ | ५ | ग्राम | ग्रामे |
| १५५ | १७ | महाचर्य | महाश्चर्य |
| १५८ | १० | येषु | ये तु |
| १६३ | ५ | वे चा | वेके चा |



ब्रज वल्लभ द्विवेदी

ॐ श्रीगणेशाय नमः ।

—:०:—

# न्यायवार्त्तिकम् ।

## श्रीभारद्वाजोद्द्योतकरविरचितम् ।

### प्रथमोऽध्यायः ।

यदक्षपादः प्रवरो मुनीनां
शमाय शास्त्रं जगतो जगाद ।
कुतार्किकाज्ञाननिवृत्तिहेतुः
करिष्यते तस्य मया निबन्धः(१) ॥

प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रं(२) तस्याभिसम्बन्धवाक्यं प्रमाणतोऽर्थप्रतिपत्तावित्येवमादि तस्यानुसन्धानवाक्यं शास्त्रस्य पुरुषश्रेयोभिधायकत्वात् । शास्त्रं पुनः प्रमाणादिवाचकपदसमूहो व्यूहविशिष्टः पदं पुनर्वर्णसमूहः पदसमूहः सूत्रं सूत्रसमूहः प्रकरणं प्रकरणसमूह आह्निकम् आह्निकसमूहोऽध्यायः पञ्चाध्यायी शास्त्रम् । तत्पदार्थाः प्रमाणादयः तस्य शास्त्रस्य पदानामर्थाः प्रमाणादयः षोडशात्मानः

(१) "अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति । यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत् तथापि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेन आच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयत इति प्रयोजनवानयमारम्भ" इति न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्राः ॥

(२) आदिमं सूत्रम्—पा० २ पु० ।

तच्छास्त्रं पुरुषश्रेयोऽभिधत्ते । प्रत्यक्षानुमानाधिगतवस्तु
न्वाख्यानं शास्त्रधर्मः तस्य विषयः प्रत्यक्षानुमानानधिगतवस्तु
आध्यात्मिकशक्तिसम्पद्युक्तोन्तेवासी । पुरुषः पुनश्चतुर्धा
प्रतिपन्नोऽप्रतिपन्नः सन्दिग्धो विपर्यस्तश्चेति । तत्र प्रतिपन्न
तिपादयिता । इतरे सापेक्षाः सन्तः प्रतिपाद्याः । ते यदेन्द्रि
सन्निकर्षमपेक्षन्ते तदा प्रत्यक्षेण यदा लिङ्गदर्शनस्मृत्या
तदानुमानेन यदा पुनरुपदेशमपेक्षन्ते तदा शास्त्रं प्रवर्तते ।
पुनः सुखमाहितानिवृत्तिश्च । तच्छ्रेयो भिद्यमानं द्वेधा व्यव
दृष्टादृष्टभेदेन । दृष्टं सुखमदृष्टमहितनिवृत्तिः । अहितनिवृत्ति
त्यन्तिकी अनात्यन्तिकी च । अनात्यन्तिकी कण्टकादेर्दुःख
नस्य परिहारेण । आत्यन्तिकी पुनरेकविंशतिप्रभेदाभिन्नदुः
न्या । एकविंशतिप्रभेदभिन्नं पुनर्दुःखं शरीरं षडिन्द्रियाणि
षयाः षड्बुद्धयः सुखं दुःखं चेति । शरीरं दुःखायतनत्वाद्दुः
इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात् (१) । सुखं दुः
ङ्गात् + दुःखं स्वरूपत इति । तस्य हानिर्धर्माधर्मसाधनपरि
अनुत्पन्नयोर्धर्माधर्मयोरनुत्पादेन उत्पन्नयोश्चोपभोगात् प्रक्षये
पुरुषा रागादिमन्तो वीतरागाश्च । तत्र रागो विषयाभिषङ्ग
स एषामस्ति ते रागादिमन्तः । वैराग्यं पुनर्भोगानभिष्वङ्ग
तद्येषामस्ति ते वीतरागाः । प्रवृत्तेर्द्वैविध्यं (२) पुरुषभेदानुवि
तेषां पुरुषाणां प्रवृत्तयस्ताः पुरुषभेदमनुविधीयमाना उ
भवन्ति । वीतरागप्रवृत्तिरेकधा । तत्र या वीतरागाणां
सा खल्वेकरूपा अनिष्टप्रतिषेधार्था अनिष्टं हास्याम इत्येवं
र्तन्ते । न पुनरेषां क्वचिदभिष्वङ्गोऽस्ति । रागादिमतां

(१) तत्साधनत्वात्—पा० ३ पु० ।
(२) प्रवृत्तेरपि द्वैविध्यम्—पा० ३ पु० ।

द्विरूपा । ये तु रागादिमन्तस्तेषां याः प्रवृत्तयस्ता द्विविधा भवन्ति । इष्टानिष्टविषयाधिगमप्रतिषेधार्थाः । इष्टमाप्स्यामीति सक्तः प्रवर्तते । अनिष्टं हास्यामीति द्वेषान्निवर्तते । रागादिमत्प्रवृत्तेरपि द्वैविध्यं भवति समर्थासमर्थभेदात् । या खलु रागादिमत्प्रवृत्तिः सा समर्थाऽसमर्था च भवति । इष्टमाप्स्यामीति प्रवर्तमानो यदा प्राप्नोति तदा समर्था । अनिष्टं हास्यामीति प्रवर्तमानो यदा जहाति तदा समर्था यदा विपर्ययस्तदाऽसमर्थेति । ततः पुनः प्रवृत्तिद्वैविध्यं प्रमाणस्यार्थवदनर्थकत्वात् प्रमाणं तावदर्थपरिच्छेदकं प्रमाणसामान्यात् प्रमाणप्रतिरूपकमपि प्रमाणमित्युपचर्यते । किं पुनः प्रमाणसामान्यं प्रमाणाभासस्य सामान्यपरिच्छेदकत्वम् प्रमाणेनापि सामान्यं परिच्छिद्यते प्रमाणाभासेनापि । सोऽयं प्रमाता यदा प्रमाणेनावधार्य प्रवर्तते तदास्य प्रवृत्तिः समर्था भवति यदा पुनः प्रमाणाभासेनार्थमवधार्य प्रवर्तते तदाऽसमर्था तस्याः पुनरर्थवत्त्वं प्रमाणतोऽर्थप्रतिपत्तावित्यादिभाष्यम् । परस्परापेक्षित्वादुभयासिद्धिरिति चेत् । न अनादित्वात् । यदि प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यं यदि वा प्रवृत्तिसामर्थ्यात् प्रमाणतोऽर्थप्रतिपत्तिः किं पूर्वं किं पश्चादिति वाच्यम् । यदि तावत् प्रमाणतः पूर्वमर्थप्रतिपत्तिः प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते । अथ पूर्वं प्रवृत्तिसामर्थ्यमनवधार्यार्थे किमिति प्रवर्तते तस्मात् प्रवृत्तेः प्रमाणतोऽर्थप्रतिपत्तेर्वा परापरभावो न कल्प्यत इति । तच्च नैवं कस्मात् अनादित्वात् अनादिरयं संसार इति पूर्वाभ्यस्तसूत्रे प्रतिपादयिष्यामः । आदिमति च संसारे एष दोषः किं पूर्वं प्रमाणतोऽर्थप्रतिपत्तिराहोस्वित् प्रवृत्तिसामर्थ्यमिति । प्रमाणप्रवृत्त्योर्वा बलाबलजिज्ञासायामुभयसामर्थ्यप्रतिपादनार्थं वाक्यं लोकः खलु प्रवर्तमानः प्रमाणेनावधार्य प्रवर्तते स च तथाप्रवर्तमानः

फलमुपलभते । तत्रेदं चिन्त्यते । किं प्रमाणतोऽर्थप्रतिपत्तिः
आहोस्वित् प्रवृत्तिरिति । उभयं समर्थं तन्नान्तरीयकत्वात् ।
फलस्य अस्य चार्थस्योपदर्शनार्थं वाक्यमिति । लोकवृत्ता
वा सर्वः प्रमाता प्रमाणेनार्थमवधार्य प्रवर्तमानः फलमुपलभ
लोकवृत्तं तद्वाक्येनानूद्यते । हेयहानोपायाधिगन्तव्यभेदाच्च
पदानीति । हेयं दुःखं तद्धेतुश्च दुःखमुक्तं हेतुरविद्यातृष्णे
मांविति । हानं तत्त्वज्ञानम् । तत्पुनर्यथार्थावस्थितपदार्था
तच्च प्रमाणम् । उपायः शास्त्रं तदप्युक्तम् । अधिगन्तव्योऽ
स पुनरात्यन्तिको दुःखाभावः । एतस्मिंश्च चतुर्वर्गे
णस्य प्राधान्यप्रदर्शनार्थं चेति । कथं पुनरनेन वाक्येन प्र
दिचतुर्वर्गः प्रदर्श्यत इति । प्रमाणप्रमेयाधिगतयः श्रुति
प्रमाता तन्नान्तरीयकत्वात् । न हि प्रमातारमन्तरेण प्रमाणं
वति तदिदं वाक्यमवयवश उपन्यस्य वर्ण्यते । तत्र प्रमाण
तसिर्वचनविभक्तिव्याप्तिप्रदर्शनार्थः । प्रमाणत इतीयं नि
ञ्चमी । अस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं च ।
पुनः पञ्चमीव्यतिरेकेण तसिर्लभ्यते लभ्यत इत्याह । आद्या
पसंख्यानादिति । तत् किं सिद्धं भवति वचनव्याप्त्या
व्यवस्था च । प्रमाणेन प्रमाणाभ्यां प्रमाणैरिति संप्लवो
प्रमाणेनैवेति व्यवस्था विभक्तिव्याप्त्या हेतुकरणभावः । प्र
दर्थाधिगतिर्भवतीति हेतुत्वं प्रमाणेनार्थं साधयतीति साधकत
करणार्थ इति । संप्लवानुपपत्तिर्विशिष्टविषयत्वादिति चेत् ।
नभ्युपगमात् । स्यान्मतिरेषा विशिष्टविषयाणि प्रमाणानि ।
षविषयं प्रत्यक्षं सामान्यविषयमनुमानमिति । एतच्चाधिगन्त
सामान्यं(१) विशेषश्च न च सामान्यविषयं प्रत्यक्षं न जात

(१) यदुक्तं सामान्यं—पा० ३ पु० ।

विशेषविषयमिति । एतच्च न अनभ्युपगमात् । न तावत् प्रमाणद्वयं प्रतिपद्यामहे न विषयद्वयं नाप्यसङ्करम् । किं कारणम् । प्रमाणानि तावच्चत्वारि विषयः सामान्यविशेषतद्वद्भेदात् त्रेधा । सङ्करोऽप्येकस्य सर्वैः प्रमाणैरधिगतेरिन्द्रियवदिति । इन्द्रियं खलु अर्थप्रकाशकत्वात् प्रमाणं तस्य व्यवस्थासङ्करश्च व्यवस्था गन्धादिषु सङ्करः पृथिव्यादिषु द्वीन्द्रियग्राह्यत्वात् । सत्तायां गुणत्वे च सार्वेन्द्रियं ज्ञानमिति । अधिगतत्वाद् वैयर्थ्यमिति चेत् । न अन्यथा तदधिगतेः । स्यान्मतं यदि सङ्कीर्येरन् प्रमाणानि नन्वेकेन प्रमाणेनाधिगतेऽर्थे द्वितीयं प्रमाणं व्यर्थमापद्येत । अधिगतं चार्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात् । न अन्यथाधिगतेः न ब्रूमो यथा प्रत्यक्षेणार्थोऽधिगम्यते तथानुमानादिभिरपीति । अन्यथा प्रत्यक्षेणेन्द्रियसम्बद्धः । इन्द्रियासम्बद्धोऽनुमानेन । सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिरुपमानेन । शब्दोल्लेखेनागमेनेति । विषयान्तरे व्यवस्थादर्शनाच्च(१) । न च सर्वस्मिन्नर्थे संप्लवोऽस्तीति अतो न वैयर्थ्यमिति । तस्माद्व्यवस्थितमेतत्तत्सिर्वचनविभाक्तिव्याप्तिज्ञापनार्थ इति प्रमाणस्वरूपावधारणं कर्तव्यम् । किं पुनः प्रमाणस्य प्रमाणत्वं किञ्चोक्तं प्रमाणमिति उपलब्धिहेतुः प्रमाणम् उपलब्धिहेतुत्वं प्रमाणत्वं यदुपलब्धिनिमित्तं तत् प्रमाणमिति । समानत्वादलक्षणमिति चेत् यद्युपलब्धिहेतुः प्रमाणं ननु प्रमातृप्रमेययोरपि उपलब्धिहेतुत्वात् प्रमाणत्वं प्रसज्येत विशेषो वा वक्तव्य इति । अयं विशेषः प्रमाणे प्रमातृप्रमेययोश्चरितार्थत्वात् प्रमाणे प्रमाता प्रमेयं च चरितार्थम् । अचरितार्थं च प्रमाणम् अतस्तदेवोपलब्धिसाधनमिति । अकरणा प्रमाणोत्पत्तिरिति चेत् यदि प्रमातृप्रमेयाभ्यां प्रमाणं जन्यते अकरणा तर्हि प्रमाणोत्पत्तिः

(१) विषयान्तरव्यवस्थापनाच्च—पा० ३ पु० ।

प्राप्नोति । न इन्द्रियार्थसन्निकर्षस्य करणभावात् ना
प्रमाणोत्पत्तिः प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षमाणा
मातृप्रमेयाभ्यां प्रमाणं जन्यत इति नाकरणप्रमाणोत्पत्तिप्रसङ्गः
तर्हि प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षेते प्रमातृप्रमेये अ
इन्द्रियार्थसन्निकर्षोत्पत्तौ किमपेक्षेते इति तस्मिन्नपीन्द्रि
वमनादिः कर्तृकरणभावः यद्यत्पश्चाद्भवति तत्तत्पूर्वभावि
इत्यनादिः कर्तृकरणभावो द्रष्टव्य इति । यदि प्रमातृप्रमे
सद्भ्यां प्रमाणं जन्यते ततः प्रमाणमन्तरेण प्रमातृप्रमेय
सिद्धत्वात् प्रमातृत्वं प्रमेयत्वं चानुपपन्नमिति । कथं
मिति यथा कारकशब्दोऽयं तथा प्रमाता प्रमेयमिति
च कारकशब्दाः क्रियामन्तरेणात्मानं लभन्त इति ।
द्रव्यमात्रं कारकं न च क्रियामात्रमिति । कारक
प्रवर्तमानः क्रियासाधने क्रियाविशेषयुक्ते प्रवर्तते ।
तृप्रमेयशब्दौ च कारकशब्दौ तावन्तरेण क्रियां न प्रवर्ते
ति । न । पाचकादिशब्दवत् त्रिकालविषयत्वात् , न ब्रू
यासम्बन्धेनैव कारकशब्दाः प्रवर्तन्त इति, अपि तु त्रिकाल
एते यदि क्रियासम्बन्धनिमित्ताः स्युर्न क्रियासम्बन्धमन्तरे
र्तेरन् क्रियासम्बन्धमन्तरेण तु प्रवर्तन्ते किं पुनर्निमित्तं
तच्च त्रिष्वपि कालेष्वस्तीति । तस्मादुपपन्नं प्रमातृप्रमेया
माणं जन्यत इति तदुपलब्धिसाधनमिति । साधकतम
प्रसङ्गः । न चायं प्रसङ्गोऽस्ति प्रमाता च प्रमेयं चोपल
त्तत्वात् प्रमाणं प्रसज्यत इति । कस्मात् साधकतमत्वात्
तम्म प्रमाणं न तु प्रमातृप्रमेये । कः खलु साधकतमार्थः
तमं प्रमाणमिति केवलं वाक्यमभिधीयते नार्थ इति । भा
योस्तद्वत्ता न प्रमातरि प्रमेये वाऽसति प्रमा भवति सति

न पुनः सति भवत्येव प्रमाणे तु सति भवन्ती भवत्येव सोऽयम-तिशयः साधकतमत्वमुच्यते । यद्वान्वा प्रमिमीते सोऽतिशयः, किंवान् प्रमिमीते प्रमाणवान् प्रमिमीते प्रमाणे सति प्रमिमीते ना-सतीति सतोर्वाऽकर्तृत्वं यदभावात् । यस्य चाभावात् प्रमातृप्रमेये न प्रमां कुरुतः सोतिशयः संयोगवच्चरमभाविता वा यथा वा संयोगः पश्चाद्भावी द्रव्यशक्तिर्भवति तथा प्रमाणं चरमभावि प्र-मातृप्रमेययोः प्रमाशक्तिर्भवति पश्चाद्भावोऽतिशयः । प्रतिपत्तेरा-नन्तर्यं वा । यद्वा प्रमाणानन्तरं प्रतिपत्तेर्जन्म स चायमतिशय इति । असाधारणकारणता वा प्रमाता साधारणं कारणं सर्वप्र-तिपत्तीनां प्रमेयमप्यशेषपुरुषसाधारणत्वात् तथाभूतं प्रमाणं त्वसा-धारणकारणत्वात् प्रधानम् । प्राधान्याच्च साधकतमत्वेनाभिधीयत इति । प्रमाकारणसंयोगविशेषकत्वं वा यो वा प्रमाकारणं संयोग-स्तस्य प्रमाणमनुग्रहे वर्तमानमतिशयशब्दवाच्यम् । अर्थग्रहणं प्र-माणविषयप्रतिपत्तिनिषेधार्थं यतो न प्रमाणविषया प्रतिपत्तिः पुरुषमितिकर्तव्यतायां प्रयोजयति किन्त्वर्थस्य तथाभावाविषया यदायमर्थस्य तथाभावं प्रतिपद्यते अथ प्रवर्तत इति उपेक्षणीय-विषयप्रतिषेधार्थं वा न ह्युपेक्षणीयविषयप्रतिपत्तिः पुरुषमितिकर्त-व्यतायां प्रयोजयति किन्त्वर्थस्य सुखदुःखहेतुभावविषया यदाय-मर्थस्य सुखदुःखहेतुभावं प्रतिपद्यते अथ प्रवर्तत इति प्रमाणाग्रहणं गम्यमानत्वादिति चेत् । न प्रमाणविशेषज्ञापनार्थत्वात् । अर्थ-प्रतिपत्तौ प्रवृत्तिसामर्थ्यादित्यभिधीयमाने गम्यते एवैतत् प्रमा-णत इति न हि काचित्(१) प्रतिपत्तिः प्रमाणमन्तरेण भवति । तच्च नैवं प्रमाणविशेषज्ञापनार्थत्वात् अस्त्ययं प्रमाणशब्दः प्रमाणे वर्त-मानोऽस्ति च प्रमाणसामान्यात् प्रमाणाभासे ऽपीति । तथेह प्र-

(१) कदाचिद्-पा० ३ पु० ।

सा
माणेन प्रतिपत्तिः सा प्रवृत्तिञ्चसामर्थ्यं प्रतिपादयति प्रमाणं ... दिति । न च प्रमाणग्रहणमन्तरेण पञ्चम्यधिधानं लभ्यते । ... प्रयोजनं अतश्च प्रमाणग्रहणं कृतमिति । अर्थग्रहणेन सुखदुः... तुत्वेन सर्वसङ्ग्रहोऽर्यमाणत्वात्(१) । सर्वः प्रमाणादिरर्थः सुखदुः... सर्वश्चार्यते अर्यमाणत्वादर्थ इति न व्याघातादविवक्षितत्... सर्वः प्रमाणादिरर्थः सुखदुःखहेतुरिति ब्रुवता हेयादिभेदाः... र्थपदानीति व्याहन्येत । न च प्रमाणादिहानं शक्यं कर्तुं... प्रमाणादिहानं विवक्षितं तस्माद्व्याख्यानमेतत् किन्तु सुख... त्वेन तद्धेतुत्वेन च यावतां सङ्ग्रहस्ते ऽभिधीयन्ते अधिकारात्... संविदो ग्रहणमनाधिकारात् अकर्मत्वाच्च न संविद्धेया असुख... त्वात् अतद्धेतुत्वाच्च नाप्यर्यते फलत्वात् सोऽयं प्रमाणार्थोऽपरि... यः इयानयं प्रमाणविषय इति न परिसंख्यातुं शक्यम् आनन्... उभयस्यापि परिसंख्यातत्वात् । एतावानयं प्रमाणार्थो यत्सुख... तद्धेतुश्चेति तच्चोभयं परिसंख्यातम् अतो न युक्तमानन्... परिसंख्यातुं शक्यं प्राणभृद्भेदस्यचापरिसंख्येयत्वादपरिसं... प्रमाणार्थ इत्यसम्बन्धमुक्तमिति । नार्थशब्दस्य प्रयोजनवाचि... प्रमाणार्थोऽपरिसंख्येय इति । प्रमाणे प्रयोजनमपरिसंख्येय... वाक्यार्थः कथं स एवार्थः केषाञ्चित्सुखहेतुर्भवति केषाञ्चिद्दुः... तुरिति । अर्थवति च समर्थे प्रमाणे अर्थवन्ति समर्थानीति... न्यतमत्वार्थः साधकतमार्थो द्रष्टव्यः प्रकरणात् प्रकरणं हि... प्रमाणं प्रधानमिति वर्ण्यते । यदि पुनर्यथा श्रुतिवाक्य... स्यात् किं प्रमाणसामर्थ्यं वर्णितं स्यात् तस्माद्यथोक्तं न्या... ति । प्रमाता स्वतन्त्रः किं पुनः स्वातन्त्र्यं कारकफलोपा... यस्मात् कारकाणां फलेनायमभिसम्बध्यते । तत्समवा...

(१) अर्थ्यमानत्वात्–पा० ३ पु० ।

यद्वा अशेषकारकनिष्पाद्यायाः क्रियायाः पुरुष आश्रयो भवति तत्प्रयोक्तृत्वमितराप्रयोज्यता वा । यद्वा परिदृष्टसामर्थ्यानि कारकचक्राणि प्रयुङ्क्ते तैश्च न प्रयुज्यते । तत्त्वपरिसमाप्तिर्विनियोगयोग्यता उपेक्ष्यता वा याऽसाववितंवादिता सावधारितस्यार्थस्य विनियोगयोग्यता सुखसाधनं वा दुःखसाधनं वाऽयमर्थ इति । ज्ञात्वा विनियोगः समाप्तिस्तत्प्राप्तिस्तत्प्रतिषेधश्च । यद्वा न सुखसाधनं न दुःखसाधनमित्युपेक्षेति किं पुनस्तत् सदसती तत् तस्य भावस्तत्त्वमित्यत्र तद्वाच्यं यस्य भाव इति सदसती तत् प्रमाणविषयत्वेनाधिकारात् सदसती प्रमाणविषयावित्यधिकृतम् तस्मात् सदसती तदिति तद्भावः सदसत्त्वं सदसतोः प्रमाणविषयता तत्प्रतिषेधश्च तयोः खलु सदसतोर्भावो द्विरूपः विधीयमानः प्रतिषिध्यमानश्च यदेकत्र विधीयते तदन्यत्र प्रतिषिध्यते तद्यथा गन्धवती पृथिवी अगन्धा आप इति प्रमाणविषयत्वात् सदसद्भावाविशेषप्रसङ्ग(१) इति चेत् । न अनैकान्तात् तत्र भवेदेषा बुद्धिर्यदि प्रमाणेन सदसती गम्येते ततः प्रमाणविषयत्वादुभयोरविशेषः प्राप्तः तच्च न अनैकान्तात् सर्वमिदं गोघटादि द्रव्यजातं प्रमाणगम्यं भेदवच्च तस्मादनेकान्तोयमिति स्वतन्त्रपरतन्त्रोपलब्ध्यनुपलब्धिकारणभावाच्च विशेषः सत्खलु प्रमाणस्यासम्बन्धं स्वतन्त्रं भवति असत्तु परतन्त्रं प्रतिषेधमुखेन प्रतिपद्यते प्रदीपवदिति यथा प्रदीपोऽपवरकादिस्थितं घटादिकमर्थं प्रतिपादयति तद्वदसदपि प्रतिपादयति । न ह्यसत्प्रतिपत्तौ उपायान्तरमास्थीयते दृश्यमाने हि घटादिकेऽर्थे नानेन समानजातीयं दृश्यान्तरमस्ति यद्यभविष्यदिदमिवाद्रक्ष्यत न च दृश्यते तस्माद्दर्शनाभावान्नास्तीति गम्यते । एवं प्रमाणेनापि

(१) सदसतोरविशेषप्रसङ्गः—पा० ३ पु० ।

सति प्रमीयमाणे नानेन समानजातीयं प्रमेयान्तरमस्ति यदि ष्यदिदमिवामास्यत न च प्रमीयते तस्मान्मानाभावान्नास्तीति देवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति तत्र स्यात् सद्भेदा न प्रकाशन्त इति नोच्यन्ते चतुर्वर्गानन्तर्भावाद्वा, श्चवदभावप्रपञ्चोऽप्युद्दिष्टो वेदितव्य इति भावोपदेशादभाव उद्दिष्टो भवतीति अतश्च नोच्यन्त इति ॥

**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ता तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजाति हस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥**

सच्च खलु षोडशधा व्यूढमुपदेक्ष्यत इति । व्यूहः त एते सद्भेदा इति सूत्रम् । सर्वपदार्थप्रधानः समासो किमुक्तं भवति । सर्व एते प्रमाणादयो विज्ञेया इति । हि समासान्तरपरिग्रहाद्विशेषणत्वेनोपयुक्तानां प्रमाणादी ज्ञेयता स्यात् यथावचनं विग्रहः यदेव निर्देशे वचनभेद प्रयोजनं तदिहापि द्रष्टव्यम् । प्रमाणादीनां तत्त्वमिति षष्ठी । कः पुनः शेषः कारकाणामविवक्षा शेष इति । कारकं कारकार्थो वा विवक्ष्यते स शेषः तद्यथा ब्राह्मणस्य ण्डलुरिति । तत्त्वस्य प्रमाणादिभ्योऽन्यानन्यत्वे दोषः वत् प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रमाणाद्यधिगमाधि धिगम इति प्राप्तम् । किं कारणं तत्त्वविशेषणत्वेनोपादाना जपुरुषानयनक्रियावदिति । अथाऽभेदस्तत्त्वग्रहणानर्थ प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रतिपद्यसे एवं तर्हि तत्त्वग्र र्थकं सम्पद्यते नोभयथाप्यदोषादित्येके । यदि तावत् प्रमा व्यतिरिक्तं तत्त्वं स्यात् तस्यास्वतन्त्रत्वात् प्रमाणादयोऽपि इति कुण्डे बदरवृत्तित्वादिति यथा कुण्डे बदराणां वृत्तित्वा

देशिते भावस्यास्वतन्त्रत्वात् कुण्डे बदराणि वर्तन्त इत्युक्तं भव-
ति । तथेहापि तत्त्वज्ञानान्निःश्रेयसाधिगम इति प्रमाणादीनां ग्रहणं
भावस्यास्वतन्त्रत्वादिति । अभेदेपीषुस्थितिवत्तद्भावप्रतिषेधो ना-
र्थान्तरमिति न प्रमाणादिमात्रमुच्यते अपि त्वर्थान्तरं प्रतिषिध्यते ।
यथेषोः स्थितिरिति नेषुमात्रं स्थितिरपि तु गतिमदर्थान्तरं(१)
न भवतीति । तन्न । अनर्थान्तरत्वासिद्धेः । तत्त्वज्ञानान्निःश्रेयसा-
धिगम इति तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेयसमधिगम्यमानं
कर्म भवतीति । किं पुनस्तत्त्वं किं वा निःश्रेयसमिति । तत्त्वं प-
दार्थानां यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वं यो यथावस्थितः
पदार्थः स तथाभूतप्रत्ययोत्पत्तिनिमित्तं भवति यत् तत् तत्त्वम् ।
निःश्रेयसं पुनर्दृष्टादृष्टभेदाद्द्वेधा भवति । तत्र प्रमाणादिपदार्थतत्त्व-
ज्ञानान्निःश्रेयसं दृष्टं न हि कश्चित्पदार्थो ज्ञायमानो हानोपादानो-
पेक्षाबुद्धिनिमित्तं न भवतीति एवं च कृत्वा सर्वे पदार्था ज्ञेयतयो-
पक्षिप्यन्ते इति । परन्तु निःश्रेयसमात्मादेस्तत्त्वज्ञानाद्भवति दृष्टं
प्रमाणादिपरिज्ञानाददृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानादिति न
प्रमाणमस्ति । न नास्त्यर्थस्य तथाभावात् अर्थं ह्ययं तथाभूतो
यदात्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसमधिगम्यते । यदा ह्यय-
मात्मादि प्रमेयं विपर्ययेणाध्यवसितो भवति । अथ संसारं नातिव-
र्तत इति । एनं(२) चार्थं द्वितीयसूत्रे प्रतिपादयिष्यामः । यदि पुनः
प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं स्यान्न मोक्ष्यमाणा मोक्षाय
घटेरन् न हि कस्यचित् क्वचिच्च तत्त्वज्ञानं नास्तीति तस्मादा-
त्माद्येव प्रमेयं मुमुक्षुणा ज्ञेयमिति । पृथगुपदेशाच्च । यदि प्रमा-
णाद्येव प्रमेयं स्यात् तस्य च परिज्ञानान्निःश्रेयसं भवेत् । नात्मा-

(१) गतिमत्त्वार्थान्तरं—पा० २ पु० ।
(२) एवं—पा० १ पु० ।

दि प्रमेयं पृथगुपदिष्टं स्यात् । प्रमेयार्थानवधारणार्थायां चो
प्रक्रियायां प्रमेयस्य विहितत्वादाद्येन सूत्रेणाकुशलः सू
स्यात् । तच्चैतदुत्तरसूत्रेणानूद्यत इति भाष्यम् । हेयहानोपा
गन्तव्यभेदाच्चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिग
ति । हेयं दुःखं तस्य निर्वर्तकमविद्यातृष्णे धर्माधर्माविति
तत्त्वज्ञानं तस्योपायः शास्त्रम् । अधिगन्तव्यो मोक्षः ।
चत्वार्यर्थपदानि सर्वास्वध्यात्मविद्यासु सर्वाचार्यैर्वर्ण्यन्त
संशयाद्यग्रहणं पृथक् प्रमेयान्तर्भावादिति चेत् । न विद्याप्र
भेदज्ञापनार्थत्वादिति । संशयादयः प्रमेयेऽन्तर्भवन्तीति पृथ
वक्तव्याः । न विद्याप्रस्थानभेदज्ञापनार्थत्वात् । चत
विद्या भवन्ति ताश्च पृथक्प्रस्थानाः । अग्निहोत्रहवनादि
त्रयी । हलशकटादिप्रस्थाना वार्ता । स्वाम्यमात्यभेदानुवि
दण्डनीतिः । संशयादिभेदानुविधायिनी आन्वीक्षिकी ।
संशयादिप्रस्थानमन्तरेणात्मविद्यामात्रमियं स्यात् ततः कि
अध्यात्मविद्यामात्रत्वादुपनिषद्विद्यावत् त्रय्यामेवान्तर्भावा
तुष्टं निवर्तते(१) तस्मात् पृथग्गृह्यन्त इति । तत्र संशयस्त
स्वरूपानवधारणात्मकः प्रत्ययः । अनवधारणात्मकश्च प्र
व्याहन्यते । न व्याघातः स्वरूपावधारणात् स्वरूपप्रत्य
अस्ति मे संशयज्ञानमिति । वस्तुस्वरूपं तु नानेन परि
तदुभयमनवधारणात्मकश्च प्रत्ययश्चेति । स कथं न्यायस्या
तीति । यस्मान्नानुपलब्धे न निर्णीते न्यायः प्रवर्तते । उ
ऽनिर्णीतश्चेति व्याहतम् । यद्युपलब्धो नानिर्णीतोऽथानिर्णी
पलब्ध उपलब्धोऽनिर्णीतश्चेति व्याहतम् । नास्ति व्याघा
मान्येनोपलब्धो विशेषतोऽनिर्णीत इति । एवमपि यथो

(१) निवर्तत--पा० ३ पु० ।

थाऽनिर्णीत इति व्याघातानिवृत्तिः नानिवृत्तिः यथा तथेति व्यपदेशात् सर्वथा निर्णीते यथा निर्णीतस्तथोपलब्ध इत्यनर्थकं स्यात् । तस्मात् सामान्यत उपलब्धो विशेषतोऽनिर्णीत इति । स चायं संशय एवंभूतः प्रमेयेन्तर्भूत एवमर्थं पृथगुच्यते । अथ प्रयोजनम् । किं पुनः प्रयोजनमिति । येन प्रयुक्तः प्रवर्तते तत् प्रयोजनमिति लौकिकोयमर्थः । केन प्रयुज्यते । धर्मार्थकाममोक्षैरिति केचित् । वयं तु पश्यामः सुखदुःखाप्तिहानिभ्यां प्रयुज्यत इति । सुखदुःखसाधनभावात्तु सर्वेऽर्थाश्चेतनं प्रयोजयन्तीति । तदिदं प्रयोजनं न्यायस्याश्रयः । क आश्रयार्थः आधारार्थस्तावन्न भवति । उपकारकत्वमाश्रयार्थः तन्मूलत्वात् परीक्षाविधेः । प्रयोजने सति परीक्ष्यत इति प्रयोजनं परीक्षां प्रवर्तयतीति । का पुनरियं परीक्षा । न्यायः । कः पुनरयं न्यायः । प्रमाणैरर्थपरीक्षणं न्यायः । किमुक्तं भवति । समस्तप्रमाणव्यापारादर्थाधिगतिर्न्याय इति । नैकैकं प्रमाणमर्थपरिच्छेदहेतुभावेन व्यवतिष्ठमानं न्याय इत्युच्यते किन्तु समस्तानि । सोऽयं विप्रतिपन्नपुरुषप्रतिपादकत्वात् परमो न्याय इति वक्ष्यामः । प्रत्यक्षागमाश्रितमनुमानं प्रत्यक्षागमाश्रितमिति प्रत्यक्षागमाविरोधि यदिहानुमाना(१)धिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसन्धीयते अथ स्फुटतरः प्रत्ययो भवति । यत्र पुनरेतानि प्रमाणानि इतरेतराप्रतिसंहितानि व्यावृत्तानि प्रयुज्यन्ते । न्यायविप्लवोऽसौ लाभपूजाख्यातिकामैस्तीर्थप्रतिरूपकैः प्रवादो वर्ण्यते । यत्पुनरनुमानं प्रत्यक्षागमविरोधि स न्यायाभास इति । प्रत्यक्षविरुद्धं तावत् वह्निरनुष्णः कृतकत्वाद्घटादिवत् । कः पुनरस्यानुमानस्य विरोधः अनुमानाविषये प्रयोगः । नायमनुमानस्य विषये प्रयोगः नायमनुमानस्य विषयः यस्मिन् विषये एतत्प्रयुज्यते स प्रत्यक्षे-

(१) यदि ह्यनुमाना—पा० १ पु० ।

णापह्नुत इति । अपरे पुनरश्रावणः शब्द इति प्रत्यक्षविरोधं वर्णयन्ति तैस्तु न प्रत्यक्षस्य विषयो ज्ञातो नानुमानस्य इति । किं कारणम् इन्द्रियवृत्तीनामतीन्द्रियत्वात् णत्वं चेन्द्रियवृत्तिः सा कथं प्रत्यक्षा भवति । आग रुद्धं शुचि नरशिरःकपालं प्राण्यङ्गत्वात् शङ्खशुक्तिवदिति थमिदमागमविरुद्धं । शुचि नरशिरःकपालमिति ब्रुवता शुच्यशु च्यः किमुक्तं भवति शुचीति । यदि स्रष्टुः प्रत्यवायाभावः स्येति वाच्यम् । यद्यात्मन इति ब्रूयात् तदागमार्थानुष्ठानका णावस्थानादेवमेतत् । अथ त्रयीविदामिति ब्रूयात् त्रय्यग माद्विरोध इति वाच्यम् । शुचि नरशिरःकपालमिति कोऽर्थः शेषविधानमेतत् विशेषविधानं हि शेषनिषेधविषयं यदि शु रशिरःकपालमिति किमशुचीति वाच्यम् । अथ सर्वमेव शु दृष्टान्तो नास्ति सर्वस्य पक्षीकृतत्वादिति( २ ) । अथानुमा रुद्धं कस्मादनुमानं न भवति एकस्मिन्ननुमानद्वयसमावेशास म्भवात् ।न विरोधः । न ह्यन्वयव्यतिरेकसम्पन्ने अनुमाने एक समाविशतः तस्यान्नानुमानविरुद्धम् । प्रत्यक्षविरोध्यपि तर्हि प्नोति । न न प्राप्नोति अन्वयव्यतिरेकसम्पन्नस्य प्रत्यक्षेण तत्वात् । अथोपमानविरुद्धं कस्मान्न भवति नोपमानविरुद्धं प्रमाणविरोधानुविधानात् । उपमानविरोधः पूर्वप्रमाणानु आगमाहितसंस्कारस्मृत्यपेक्षं च सारूप्यज्ञानमुपमानमिति मः । प्रत्यक्षागमयोर्विरोधादुक्तं तदिति । तत्र वादजल्पौ स जनाविति भाष्यम् । तस्य कुत उत्थानं तेनानेन प्रयोजनेन स णिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ता इति तत्र वाद

( १ ) प्रत्यक्षविरुद्धम्—पा० ३ पु० ।
( २ ) पक्षत्वात्—पा० ३ पु० ।
१ "नोपमानं न" इति तात्पर्यटीकास्थः पाठ

किंप्रयोजनाविति युक्तो विचार इत्याह । तत्र वादजल्पौ सप्रयोजनाविति । तस्मिन् न्यायाभास इति । वितण्डा तु परीक्ष्यते सप्रयोजना निष्प्रयोजना वेति । एके तावद्वर्णयन्ति निष्प्रयोजना दूषणमात्रत्वात् । तच्च नैवं न दूषणमात्रं वितण्डा किन्त्वभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिक उच्यते । अथ पक्षमपि न प्रतिपद्यते उन्मत्तवदुपेक्षणीयः स्यात् । अथ परपक्षप्रतिषेधज्ञापनं प्रयोजनमिति तादृगेवैतत् । एतस्मिन्नपि चतुर्वर्गं चेत् प्रतिपद्यते सोऽस्य पक्षः चतुर्वर्गो भाष्य उक्तः । अथ न प्रतिपद्यते पूर्ववदुपेक्षणीयः । प्रतिपक्षस्थापनाहीनं च वाक्यं वितण्डेत्युच्यते । तस्य यद्यर्थं प्रतिपद्यते सोऽस्य पक्षः । अथ न प्रतिपद्यते पूर्ववद्दोष इत्युक्तं प्रयोजनमिति । प्रत्यक्षविषयोऽर्थो दृष्टान्तः । किमुक्तं भवति । लौकिकपरीक्षकाणां दर्शनाविघातहेतुरिति । एवं चात्मादिव्याप्तिरिति दर्शनाविघातहेतुत्वेन दृष्टान्ते वर्ण्यमाने आत्मादि व्याप्तं भवति । प्रत्यक्षादिविषयतायां चात्मादि त्यक्तं भवति । ततश्चोदाहरणसूत्रं व्याहन्येत । सोऽयं दृष्टान्तः प्रमेयमुपलब्धिविषयत्वात् तस्य पृथगुपदेशो न्यायस्य तन्मूलत्वात् सति तस्मिन्ननुमानागमौ स्यातामसति तु न स्यातामिति, पूर्वं प्रत्यक्षदृष्टमर्थमनुमिमते । पूर्वं ज्ञातं चार्थं परस्मै आचक्षते, नास्तिकस्य च व्याघातो ऽभ्युपगमे ऽनभ्युपगमे वा तदुक्तं भाष्य इति । अभ्युपगमव्यवस्था सिद्धान्तः । अभ्युपगम इदमित्थम्भूतं वेति । इदमिति सामान्यत इत्थम्भूतमिति विशेषतस्तस्य व्यवस्था इदं सांख्येष्विदं योगेष्विति । सर्वतन्त्रसिद्धान्तस्तर्हि न सिद्धान्तोऽव्यवस्थानात् न ह्ययं क्वचिद्व्यवतिष्ठत इति । तच्च न, योऽयं सर्वैरभ्युपगम इयमेव व्यवस्था, तस्य प्रमेयेऽन्तर्भूतस्य पृथग्वचनं वादादिविषयत्वात्, सिद्धान्तभेदे हि वादजल्पवितण्डाः प्रवर्तन्ते इति । अथावयवा वाक्यैकदेशाः, किं पुन-

वाक्यं, पूर्वपदस्मृत्यपेक्षो( १ )ऽन्त्यपदप्रत्ययः स्मृत्यनुग्रहे
तिसन्धीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यं, तस्य भागा प्र
इति । ते कियन्तः, यावद्भिः सिद्धिः परिसमाप्यत इति ।
नरियं सिद्धिः, पदार्थस्य तथाता(२) क्वा परिसमाप्तिः, विशेष
ते समाख्याशब्दैरभिधीयन्ते प्रतिज्ञादय इति, तत्रागमः
न युक्तं आगमस्य तत्त्वान्यत्वच्छेदकत्वात् प्रतिज्ञार्थस्य च
द्यत्वात्, आगमाधिगतस्य प्रतिपाद्यत्वात् आगमः प्रतिज्ञेति
षः, य एवार्थ आगमेनाधिगतस्तमेव परस्मा आचष्ट इत्याग
तिज्ञेत्युच्यते । एवं लिङ्गदर्शनमात्रे हेतूपचाराद्धेतुरनुमानं
यत्तु द्वितीयं लिङ्गदर्शनं तत्सम्बन्धस्मृतिव्यक्तिहेतुभावाद्धे
च्यते । स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनादुदाहरणं
यस्मात् पूर्वानुभूतमर्थं स्मरति स्मृतं च विषयमुदाहरणं
त्ते । तेन पूर्वानुभवप्रसिद्धमनुविधीयमानं प्रत्यक्षमिव प्र
ति । कः पुनरुपमानार्थः अविप्रतिपत्तिः यथा प्रत्यक्षे न
तिपद्यते एवमुदाहरणे ऽपीति । यथा तथेत्युपमानैकदेशे
नोपचारादुपमानमुपनय इति । उपमानं खलु यथा तथेत्यु
पयोगे सति प्रत्यक्षागमस्मृतिपूर्वकं सारूप्यज्ञानमुपमानं
त्रोपमानैकदेशे उपमानमित्युपचरन्ति । सर्वेषामेकार्थसमवा
मर्थ्यप्रदर्शनं निगमनमिति । कः पुनरेकार्थसमवायः, एक
ध्यारोपः, किं पुनः सामर्थ्यं, इतरेतरसम्प्रत्यायितार्थापेक्षितत्व
वक्ष्याम इति । निगम्यन्ते ऽनेन प्रतिज्ञादय एकार्थेन सम्बध्य
सोऽयं परमो न्याय इति । कः पुनः परमार्थः, विप्रतिप
प्रतिपादकत्वम्, एकैकशः प्रमाणानि प्रवृत्तानि न विप्रतिप

(१) स्मर्यमाणं विशेष्यवाचिपदं स्मर्यमाणविशेषणपदं
(२) तथाता तथात्वम् ।

प्रतिपादयन्ति वाक्यभावापन्नानि पुनर्विप्रतिपन्नमतोऽयं परम इति । किं पुनरवयवाः प्रमाणान्तरमुत तेष्वन्तर्भवन्तीति । किं चातः, यदि प्रमाणान्तरं परिसंख्यानमयुक्तम् अथ तेष्वेवान्तर्भवन्ति पृथगभिधानानर्थक्यमवयवानामिति । न प्रमाणान्तरमिति ब्रूमः । संहतानामेतेषां वाक्यपरतन्त्राणां विप्रतिपन्नपुरुषप्रतिपादकत्वेन पृथगुपादानमिति । त एते ऽवयवाः पृथग्भवन्तो वादजल्पवितण्डानां प्रवृत्तिहेतवो भवन्ति । तत्त्वव्यवस्थायाश्चाश्रया भवन्तीति । क आश्रयार्थः । विशेषप्रतिपादकत्वमिति । तर्को न प्रमाणसंगृहीतो न प्रमाणान्तरमपरिच्छेदकत्वात् । प्रमाणं परिच्छेदकं न तर्कः । तस्मान्न प्रमाणं न प्रमाणान्तरमप्यत एव । प्रमाणविषयविभागात्तु प्रमाणानामनुग्राहकः । यः प्रमाणानां विषयस्तं विभजते । कः पुनर्विभागः? युक्तायुक्तविचारः इदं युक्तमिदमयुक्तमिति । यत्तत्र युक्तं भवति तदनुजानाति न त्ववधारयति । अनवधारणात् प्रमाणान्तरं न भवति । तस्योदाहरणं भाष्ये कर्मनिमित्तं जन्मेति । कथं पुनः कर्मनिमित्तं जन्म भेदवत्त्वात् । कः पुनर्भेदः सुगतिर्दुर्गतिश्चेति । सुगतौ देवो मनुष्य इति । मनुष्यत्वे पुमानितर इति । पुंस्त्वे ब्राह्मणोऽन्य इति । ब्राह्मणत्वे पट्विन्द्रियो मृद्विन्द्रिय इति । पट्विन्द्रियतायामुच्चाभिजनो नीचाभिजन इति । उच्चाभिजनतायां सकलो निष्कल इति । साकल्ये विद्वान् मूर्ख इति । विद्वत्तायां समाश्वासी परित्रस्त इति । समाश्वासे वशी परायत्त इति । दुर्गतावपि तिर्यङ् नारक इति । नारकत्वेपि कूटशाल्मल्यामयःकुम्भ्यामिति । तिर्यक्तायां गौरितर इति । सोऽयं भेदोऽनेकप्रकारस्थितमनित्यमेकद्रव्यं प्रत्यात्मनियतं निमित्तमन्तरेण न युक्तः । किं कारणं? पृथिव्यादीनां सर्वपुरुषसाधारण्यात् पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वं सर्वात्मकं प्रस-

ष्येत । दृष्टश्च नियमभेदस्तस्मात् कर्म नियामकमिति
ऽयमित्थम्भूतस्तर्क उपलब्धिविषयत्वात् प्रमेयम् ।

निर्णयस्तत्त्वज्ञानं प्रमाणानां फलम् । कदा पुनर्नि
माणानां फलमिति ?। यदा वस्त्वन्तरपरिच्छेदहेतुत्वेन नो
तदा फलं यदा तेन परिच्छिनत्ति तदा प्रमाणमिति
वतिष्ठते प्रमाणफलभावः । एतच्च वक्ष्यामः "प्रमेयता
तुलाप्रामाण्यवत्"दित्येतस्मिन् सूत्रे निमित्तद्वयसमावेशा
द्विशब्दवाच्यमिति । तावेतौ तर्कनिर्णयौ लोकया
इति । बुद्ध्वा बुद्ध्वा(२) लोकः प्रवर्तमानस्तर्कनिर्णया
जहाति उपादेयं चोपादत्ते । अस्यान्तर्भावः प्रमाणेषु प्र
यदा फलं तदा प्रमेयं यदा तेन परिच्छिनत्ति तदा प्रमा

वादो नानाप्रवक्तृक इति सिद्धान्तभेदा
ज्ञानावक्तृक इति प्रत्यधिकरणसाधनोऽन्यतराधिक
यावसान इति । अधिकरणमधिकरणं प्रति
रणम् अस्य साधनमिति । किमुक्तं भवति । उभाभ्या
वक्तव्यमिति । अन्यतरस्मिन्नधिकरणे निर्णय।
वक्ष्यामः । सोऽयं किंरूपो वादः ? वाक्यसमूह
ननु च प्रमाणतर्कसाधनोपालम्भ इति श्रूयते
च ज्ञानात्मकानि "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान"मित्ये
प्रक्रमेण प्रमाणानि ज्ञानात्मकानीत्युक्तं तर्कश्चोहः
ज्ञानात्मक एव तस्माद्वाक्यसमूहोवाद इत्ययुक्तम् ।
माणतर्कसाधनोपालम्भस्यान्यथा व्याख्यानात् । त
र्णयिष्यन्तो वक्ष्यामः ।

(१) प्रमेया च—पा० १ पु० ॥
(२) बुध्या—पा० ३ पु० ॥

तद्विशेषौ जल्पवितण्डे इति । कः पुनर्विशेषोऽङ्गाधिक्यमङ्गहानिश्चेति । छलजातिनिग्रहस्थानप्रयोगादधिको जल्पः । स प्रतिपक्षस्थापनाहीनस्तु वितण्डा । एतावता विशेषेण कथामार्गभेद इति । विषयभेदाच्च भेदः शिष्यादिविषयो वादः शिष्यमाण[1]विषये जल्पावितण्डे इति ।

अन्यतमलिङ्गधर्मानुविधानेन प्रवर्तमाना अहेतवः सन्तो हेतुवदाभासन्त इति हेत्वाभासाः । ते च निग्रहस्थानम् । निग्रहस्थानप्राप्तानां पुनरेषां पृथगुपदेशो वादे देशनीयत्वादिति भाष्यम् । यस्मात् किलैते वादे देश्यन्ते अतः पृथगुपदिश्यन्ते । नोभयथाप्यसम्बन्धात् न वादे देशनीयत्वं पृथगुपदेशाविनाभावि, पृथगुपदेशो वा वादे देशनीयत्वाविनाभावी । यदि तावद्यः पृथगुपदिश्यते स वादे देश्यत इति सर्वे पदार्था वादे देशनीयाः प्रसज्यन्त इति । किं कारणं ? सर्वे पृथगुपदिष्टा इति । अथ वादे देश्यन्ते ते पृथगुपदिश्यन्त इति । तदपि नानेकान्तात् । न तावन्निग्रहस्थानेभ्यो न्यूनाधिकयोः पृथगुपदेशोऽथ च देश्येते वादे । तस्माद्वादे देशनीयत्वादेषां पृथगुपदेश इति यत्किञ्चिदेतत् । एतदेव तु न्याय्यं पृथगुपदेशप्रयोजनं विद्याप्रस्थानभेदज्ञापनार्थत्वादिति । अथ कस्मान्निग्रहस्थानभावापन्नानां हेत्वाभासानां पृथगुपदेश इति । प्रमाणसामान्यात् पृथगुपदेश इति । अथ कस्माद्वादे देश्यन्ते प्रमाणसामान्यात् । प्रमाणानि वादे ऽभिधीयन्ते प्रमाणसामान्यं च हेत्वाभासेऽस्तीति । अतः प्रमाणसामान्याद्वादे ऽभिधीयन्त इति ।

अथ वादे निग्रहस्थानानि कानि चित् सन्ति कानिचिन्नेति किमयं पदार्थानां नियोगः, अथ तथाभूतानामन्वाख्यान-

१ शिष्यमाणोऽसन्ताविपर्यस्तः दुर्ज्ञानावलेपदुर्विदग्ध इति यावत्- इति तात्पर्यटी.

मिति ?, किं चातः यदि तावन्नियोग एवं भवतैवं प्र
तेति एवं पदार्थाननुयुञ्जानो भवानुपेक्षणीयः । अथ
रूपत एवावस्थिताः पदार्थास्ताननुजानाति भवान्,
न्निग्रहस्थानानि कानिचिद्वादे भवन्ति कानिचिन्नेति वक्त
न । लक्षणपरतन्त्रत्वादर्थतथाभावस्येति ब्रूमः । न पदा
वक्तृनियोगमनुविधीयन्ते । यथा तु भवन्ति तथाभूता
अन्वाख्यायन्ते । सोऽयं लक्षणपरतन्त्रत्वमाचक्षाणो
ख्येयः पदार्था भवता नियुज्यन्त इति वादस्य शिष्य
विषयत्वात् । न च शिष्यादिभिः सह वादं कुर्वी
अप्रतिभादिदेशना कार्या, तावदस्याभिधेयं यावदसौ
धितो भवतीति । प्रमाणप्रतिरूपकत्वाद्धेत्वाभासानाम
इति । किं कारणं ? भ्रान्तेः पुरुषधर्मत्वात् पुरुषर्
भ्रान्तिरिति । सोऽयं भ्रान्त्या प्रमाणं ब्रुवन् प्रमा
समपि ब्रूते अतोऽस्य निग्रह इति । कः पुनः शिष्या
योर्निग्रहः ? विवक्षितार्थाप्रतिपादकत्वम् । न्यूनाधिकापा
न्तानां वादे कथमवतारः ? प्रमाणसामान्यादेव । न्यून
प्रमाणसामान्यमधिकस्यापि । अवयवविहीनताऽवयवाधिक
क्यस्य भ्रान्त्या भवतीत्यस्यावतारः । जल्पवितण्डयोस्तु
ग्रहस्थानानीति विजिगीषुभिर्जल्पवितण्डाभ्यां प्रत्यवस्थेय
तस्य यथासम्भवं निग्रहस्थानानि वक्तव्यानीति नोपेक्ष
छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनं परवाक्ये
योगः परिज्ञानार्थमेव केवलम् । छलजातिनिग्रहस्
स्वयं न प्रयोक्तव्यानि जातेश्च स्वयं सुकरः प्रयो
न, व्याघातात्, स्ववाक्ये परिवर्जनं सुकरश्च प्रयो

( १ ) विजिगीषुर्जल्पवितण्डाभ्यां प्रत्यवस्थेयः—पा० १

व्याहतम् यदि सुकरः प्रयोगो न स्ववाक्ये परिवर्जनम्, अथ स्ववाक्ये परिवर्जनं न सुकरः प्रयोग इति व्याघातः । न व्याघातः, प्रश्नापाकरणार्थत्वात् । स्वयं च सुकरः प्रयोग इति किमुक्तं भवति । परेण जातौ प्रयुक्तायां प्राश्निकान् ब्रवीति जातिरनेन प्रयुक्तेति त एनं पर्यनुयुञ्जीरन् कथं जातिष्कतमा जाति(१)रतो जात्यभिज्ञः शक्नोति वक्तुमेवं जातिरियं जातिरिति । एवं च सुकरः प्रयोग इति । तस्मादेते संशयादयः पदार्थाः प्रमाणे प्रमेये चान्तर्भवन्तो विद्याप्रस्थानभेदज्ञापनार्थं पृथगुपदिष्टाः ।

सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्वविद्यानां भवति प्रकाशकत्वात् प्रदीपवत् प्रमाणादिप्रतिपादितमर्थमितरा विद्याः प्रतिपद्यन्त इति । किमितरासु विद्यासु प्रमाणादीनि न सन्ति ? न सन्तीत्याह । कथं न सन्ति ? अनधिकारात् । न ताः विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्ते इति प्रमाणादिप्रकाशिते त्वर्थे ताः प्रवर्तन्त इति । उपायः सर्वकर्मणामिति । प्रकाशितानां करणादुपायः यस्मात् प्रमाणादिप्रकाशितमर्थमितरा विद्याः कुर्वन्ति(२) । आश्रयः सर्वधर्माणामिति । सर्वविद्योपकारकत्वादाश्रयः । सर्वासां विद्यानामियमुपकरोति उपकारित्वादाश्रयो राजभृत्यवदिति ।

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यमिति । सर्वासु विद्यासु तत्त्वज्ञानमस्ति निःश्रेयसाधिगमश्चेति । त्रय्यां तावत् किं तत्त्वज्ञानं कश्च निःश्रेय-

(१) कतमा सा जाति—पा० ३ पु० ॥
(२) विषयं विधेयतया निषेध्यतयेति शेषः ॥

१ विशुद्धेनोपायेन द्रव्यागमः न्यायव्यवस्थापकः स्यात्
२ ग्रामाद्यारादिभिरनुपघातो ऽनुपहतत्वम्



साधिगम इति। तत्त्वज्ञानं तावदग्निहोत्रादिसाधनानां स्वा-
दि(१) परिज्ञानमनुपहतादिपरिज्ञानं च। निःश्रेयसाधिगम
स्वर्गप्राप्तिः तथाह्यत्र स्वर्गः फलं श्रूयते इति। अथ वार्त्ता
तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति। भूम्यादिपरिज्ञानं
ज्ञानं भूमिः कण्टकाद्यनुपहतेत्येतत्तत्त्वज्ञानं कृष्याद्यधिगमश्च
श्रेयसमिति तत्फलत्वात्। दण्डनीत्यां किं तत्त्वज्ञानं
निःश्रेयसाधिगम इति। सामदानदण्डभेदानां यथाकालं यथा
यथाशक्ति विनियोगस्तत्त्वज्ञानं निःश्रेयसं पृथिवीजय इति
त्वध्यात्मविद्यायामात्मज्ञानं तत्त्वज्ञानं निःश्रेयसाधिगमोऽप-
प्तिरिति। यत्पुनः प्रमाणादितत्त्वज्ञानान्निःश्रेयसं न तद्धि
मदमानादिनिमित्तत्वाद्वादादिपरिज्ञानस्य नाभिसम्बन्धो नि
यसेनेति केचित्। न चानाभिसम्बद्धं प्रतिपादयतीत्ययुक्तं प्र-
माणादितत्त्वज्ञानान्निःश्रेयसमिति। न। सूत्रार्थापरिज्ञा-
सूत्रार्थं न व्यज्ञासीर्यदेवं प्रत्यपस्थाः। क एवं सूत्रार्थं
प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसमिति। अपि तु प्र-
ज्ञानान्निःश्रेयसं तदुत्तरसूत्रे वक्ष्यामः। उक्तं चात्मादे
मेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इति। यच्चेदमुच्यते
मानादिनिमित्तं वादादय इति। एतच्च न। असति
वात् सति चाभावात्। असति वादादिज्ञाने रागादयो
सनकादीनां भवन्ति(२) सति च तत्त्वविदां न भवन्ति
वादादिपरिज्ञानं रागादीनां निमित्तमिति॥

न तत्त्वपरिज्ञानादपवर्ग उभयथा दोषात्। यदि तत्त्व-
नन्तरमेवापवर्गः स्यात्तद्वतामवस्थानं न स्यात्। तद्वतां

(१) विशुद्धोपायेन द्रव्यागमः॥
(२) सनको मदादिप्रधानो दासः। सम्भवन्ति—पा०।

यस्थानं दृष्टं, कुतः शास्त्रसम्प्रदायाऽविच्छेदात् सम्प्रदायो नाम शिष्योपाध्यायसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः । यदि तत्त्वज्ञानादपवर्गः स्यात् शास्त्रसम्प्रदायो विच्छिद्येत यस्य यदा तत्त्वज्ञानं वृत्तं स तदैवापवृक्त इति । अथोत्पन्नतत्त्वज्ञानोऽवतिष्ठते न तत्त्वज्ञानं कारणं सत्यभावात् । सत्यपि तत्त्वज्ञाने यस्याभावान्नापवृज्यते सोऽन्योर्थ इति । कारणं हि तद्भवति यस्मिन् सति यद्भवति यस्मिंश्चासति यन्न भवति । अनधिगतार्थपूर्वं वा शास्त्रं स्यात् । अथ तत्त्वज्ञानानन्तरमपवर्गो वातपुत्रीयं(१) शास्त्रं स्यात् न तत्त्वदृक्पूर्वकमिति । न । निःश्रेयसस्य परापरभेदात् । यत्तावदपरं निःश्रेयसं तत् तत्त्वज्ञानानन्तरमेव भवति । तथा चोक्तम् । जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यत इति । अयं शास्त्रार्थ इति । परं च निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति । क्रमप्रतिपादनार्थं चेदं सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येवमादि ॥

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः(२) ॥ २ ॥**

एतत्सम्बन्धेनैवार्थवत्पदार्थस्तु वक्तव्यः तत्रात्माद्यपवर्गपर्यन्तं प्रमेयं ज्ञेयम् । तत्र मिथ्याज्ञानमनेकप्रकारकं वर्तते(३) । को वृत्त्यर्थो विषयार्थः । तत्रायं भेदः । तत्रात्मनि तावन्नास्तीति । आत्मा तावदस्तित्वेन प्रमाणसामर्थ्यादधिगतः ।

(१) धूर्तप्रणीतम् ॥

(२) तदनन्तराभावात्-पा० २ पु० ।

(३) तत्र प्रमेये मिथ्याज्ञानमनेकप्रकारं वर्तते प्रमेयविषयं भव-

अस्तित्वेनाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः।
नुपपत्तिः सदसतोः सारूप्याभावादिति चेत् । न।
णगम्यतोपपत्तेः । न हि सदसती सरूपे यतोऽसत्
दसद्धर्मारोपेणात्मनि मिथ्याप्रत्ययः स्यादिति । उ
प्रमाणगम्यतोपपत्तेः । सदसतोः प्रमाणगम्यत्वं सा
याद्गुणव्यपदेशास्तद्रहितता च विशेषः । सोऽयमसद्धर्मान्
त्मन्यारोप्य विपर्येति नास्त्यात्मेति । एवमनात्मनि
आत्मेति । किं पुनरनात्मनः शरीरादेरात्मना साधर्म्यं
एतद्भवति अनात्मन्यात्मेति । अहङ्कारविषयत्वं सा
इच्छाद्याधारानाधारतेति(१) विशेषः । यथैवात्माहङ्कार
षयस्तथा शरीरादयोऽपि । कथं पुनः शरीरे
शरीरवाचकशब्दसामानाधिकरण्यात् शरीरे ऽहङ्कारो
ऽहमित्यादि । इच्छाद्याधार आत्मा न शरीरादय इति
एतच्चोपरिष्टाद्वक्ष्यामः । सोऽयमात्मधर्मान् इच्छादीन्
रादिष्वध्यारोप्य विपर्येत्यहमेत इति । एवं सामान्य
रिज्ञाने सति तद्विपरीतधर्माध्यारोपेण विपर्ययः सर्वत्र
कः पुनरयं विपर्ययः ? अतस्मिंस्तदिति प्रत्ययः । शेषं
त इमे दुःखादयो मिथ्याज्ञानपर्यवसाना
देन प्रवर्तमानाः संसार इति । कः पुनरयं संसारः
दीनां कार्यकारणभावः । स चानादिः । पूर्वापर
यमात् । न च शक्यं वक्तुं पूर्वं दुःखादयः पश्चा
ज्ञानोत्पत्तिरिति, पूर्वं वा मिथ्याज्ञानं पश्चाद्दुःखादय
शक्यं वक्तुमिति । यदा तु तत्त्वज्ञानान्मिथ्याज्ञान
कथमपायः ? समानविषये तयोर्विरोधात् । यस्मान्नि

(१) इच्छाद्याधारतानाधारतेति—पा० ३ पु०॥

तत्त्वज्ञानं च एकस्मिन् विषये विरुद्ध्येते वस्तुनो द्वैरूप्यासम्भवात् । न ह्येकं वस्तु द्विरूपं भवति । तस्मान्मिथ्याज्ञानं तत्त्वज्ञानेन निवर्त्यत इति । कथं पुनः पूर्वोत्पन्नं मिथ्याज्ञानं पश्चादुत्पद्यमानेन तत्त्वज्ञानेन निवर्त्यते ? मिथ्याज्ञानस्याऽसहायत्वात् मिथ्याज्ञानमसहायमतो निवर्त्यते । सम्यग्ज्ञानस्य च विषयः सहायी भवति । कस्मात् ? तथात्वेनावस्थानात् तथाभूतोऽसौ विषयो यथा तत्र तत्त्वज्ञानमिति । प्रमाणान्तरानुग्रहाच्च आगमानुमानादिप्रमाणं तत्त्वज्ञानस्य सहायो भवति । यदा ह्ययमनुमानागमयोः प्रतिसंहितयोर्विषयं भावयति समाहितोऽनन्यमनाश्चिन्तयति(१) ततोऽस्य विपच्यमाने ध्याने विविक्तायां ध्यानभावनायां तस्मिन्नर्थे तत्त्वप्रतिबोधि ज्ञानं प्रत्यक्षमुत्पद्यत इति । सोऽयमागमानुमानप्रत्यक्षाणां विषयं प्रतिपद्यमानस्तत्त्वमेतादिति प्रतिपद्यते । तत्त्वप्रतिपत्तेरस्य मिथ्याज्ञानं निवर्तत इति । निवृत्ते च मिथ्याज्ञाने न पुनस्तद्विषयं मिथ्याज्ञानमुत्पद्यत इति विरोधादित्युक्तम् । कः पुनर्विरोधः ? सहासम्भवः । मिथ्याज्ञानाभावे रागादयोऽपयन्तीति कार्यकारणभावादेव । कारणं मिथ्याज्ञानं कार्याः रागादयः । न च कारणं विना कार्यं भवितुमर्हति । ये तावदनुत्पन्ना रागादयस्ते कारणाभावान्माभूवन् । ये तूत्पन्नास्ते कथं ? तेषामपि वैराग्यान्निवृत्तिः । किं पुनर्वैराग्यं ? भोगानभिष्वङ्गलक्षणमित्युक्तं असक्तश्च सक्तिं बाधते । तत्पुनर्वैराग्यं कथं भवति ? तत्त्वज्ञानाद्विषयदोषदर्शनादिति । दोषाभावे प्रवृत्त्यभावः । यदाऽस्य सम्यग्ज्ञानवतो दोषा अपयन्ति अथ दोषाभावे प्रवृत्तिर्निवर्तत इति । का पुनरियं प्रवृत्तिः ? धर्माधर्मौ, जन्मसाधनत्वात् । नास्मिन् सूत्रे

(१) आश्रयति—पा० ३ पु० ॥

क्रिया प्रवृत्तिशब्देनोच्यते, अपि तु धर्माधर्मौ, तत्साधनत्वा जन्मसाधनं धर्माधर्मौ न प्रवृत्तिः क्रियायाः क्षणिकत्वात्। धर्मयोस्तु प्रवृत्तिशब्दः प्रवृत्तिसाधनत्वादिति । यौ अ गतौ धर्माधर्मौ तयोर्दोषाभावादभावो युक्तः । यौ तौ तयोर्न युक्तः।किं कारणं ? निर्दोषस्यापि भावात् निर्दोषो तिष्ठते धर्माधर्मयोश्च फलं भुङ्क्ते इति । न । अनागतयोः भावेनेष्टत्वात् । न ब्रूमो यौ वर्तमानौ धर्माधर्मौ तौ दोषा भवत इति । अपि तु यावनागतौ तौ कारणाभावाद इति । वर्तमानयोः पुनः कार्यावसानात् प्रक्षयः यौ तौ धर्माधर्मौ तयोर्यदावसानिकं कार्यं तेन व्यावृत्तिः। प्र जन्मापायः अत्रापि धर्माधर्मयोर्व्यावृत्तयोर्यदन्यच्छरीरं भवति न पुनर्वर्तमानं न भवतीति । अथ वर्तमानस्य कथं त्तिः ? संस्कारक्षयात् यावदस्य स्थितिहेतुः संस्कारो समाख्यातोऽवतिष्ठते तावदवतिष्ठते इति । जन्माभावे भाव इति निरायतनस्यानुत्पत्तेः न हि निरायतनं दुःख मर्हति । एतच्च तदाहुर्यावदात्मनि धर्माधर्मौ तावदायुः रमिन्द्रियं विषयाश्चेति। सोऽयं मिथ्याज्ञानादिकलापेन वियुक्तो(१) विमुक्त इत्युच्यते । तत्त्वज्ञानं तु खलु मि नविपर्ययेण व्याख्यातम् । स्वरूपतस्तु यथाऽवस्थि र्थाधिगतिरित्युच्यते । कस्मात् पुनरयं हाता सुखदुः ति न पुनः सुखमादाय दुःखं जहातीति ? । विवेकहा क्यत्वात् । न हि विवेकहानं शक्यं कर्तुं अतः सुखमु कामेन दुःखमपि भोक्तव्यम् । दुःखं वा जिहासता सु हातव्यं सविषान्नवदिति । सुखं दुःखानुषक्तमनादेय

(१) विमुक्तो—पा० १ पु० ॥

अनुषङ्गोऽविनाभावः यत्रैकं तत्रेतरदिति । समाननिमित्तता वा-नुषङ्गः यान्येव सुखसाधनानि तान्येव दुःखसाधनानीति । ~~समाननिमित्तता वाऽनुषङ्गः यान्येव सुखसाधनानि तान्येव दुःख-~~साधनानीति । समानाधारता वाऽनुषङ्गः यत्र सुखं तत्र दुःख-मिति । समानोपलभ्यता वानुषङ्गः येन सुखमुपलभ्यते तेन दुःखमपीति(१) ॥ २ ॥

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति भाष्यम् । प्रवृत्तेस्त्रैविध्यं कुतः ? अर्थस्य तथाभावात् नामी पदार्था वक्त्रा त्रेधा व्यवस्थाप्यन्ते एवं भवतेति । किन्त्वर्थ एवायं तथाभूतो येन त्रेधा भवतीति । नामधेयेन पदार्थमात्राभिधानमुद्देश इत्ययुक्तं घ्राणादिसूत्रव्याघातात् । "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणी"-ति लक्षणमुक्तम् । न चेदं नामधेयेनोद्देशमात्राद्भिद्यते । मात्रग्रहणसामर्थ्यादप्रसङ्गः पदार्थमात्राभिधानमित्युक्तं न च घ्राणादीनां पदार्थाभिधानमात्रत्वं कारकशब्दत्वात्—कारकशब्दा एते घ्राणादीति । तस्मान्नोद्देशप्रसङ्गः । उद्दिष्टस्य विभागो द्वेधा भवति । लक्षितस्यालक्षितस्य । लक्षितस्य(२) छलादेरलक्षितस्य(३) प्रमाणादेरिति । अथोद्दिष्टविभागद्वारेण(४) सूत्रम् । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

सूत्रार्थो निगदेनैव व्याख्यातः । उद्दिष्टविभागानर्थक्यम् व्याघातात् । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्युक्तमुद्दिष्टविभागश्च न त्रिविधायां शास्त्रप्रवृत्तावन्तर्भवतीति । तस्मा-

(१) इति द्विसूत्रीवार्त्तिकमित्याधिकं २ पु० ॥
(२) सामान्यतः ॥ (३) विशेषतः ॥
(४) विभागद्वारा प्रमाणसंख्यां नियन्तुं सूत्रम् ॥

दुद्दिष्टविभागो न युक्तः । न । उद्दिष्टविभागस्योद्देश ए
र्भावात् । उद्दिष्टविभाग उद्देश एवान्तर्भवतीति । क
लक्षणसामान्यात् । समानं लक्षणं नामधेयेन पदार्थाभि
द्देश इति । किं पुनर्विभागेन प्रयोजनम् । नियमः । प्र
त्यक्षानुमानोपमानशब्दाः प्रमाणानीति विभागो न
नियमो(१) न गम्यते चत्वार्येव प्रमाणानीति । लक्षणतश्चतु
गतिरिति चेत् । न । लक्षणस्येतरव्यवच्छेदहेतुत्वात् । स्यादेत
लक्षणतः प्रमाणचतुष्टं गम्यत इति, यस्माच्चतुर्णां लक्षणमुक्तं
न । लक्षणस्येतरव्यवच्छेदहेतुत्वात् । लक्षणं खलु लक्ष्यं स
समानजातीयेभ्यो व्यवच्छिनत्ति नियमं तु न शक्नोति कर्तुम
त्वादिति । अन्यासम्भवस्य ततोऽनधिगतेः । न हि ल
ऽन्यासम्भवोऽधिगम्यते । ततश्चतुर्णामनभिधाने चतुर्णां ल
पदेशात् संशयः स्यात्–किं विद्यमानानि न लक्षितानि
स्विदविद्यमानानीति । तस्मात् संशयनिवृत्त्यर्थं युक्तो वि
द्देश इति । अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति ।
च सूत्रविवक्षायामव्ययीभावः समासः । अन्यथा तु व
र्थो न समासः, समासे हि अक्षस्येति षष्ठी न श्रूयेत । क
र्यं समासः ? प्रादिसमासोऽयं द्रष्टव्यः प्रति गतमक्षं
मिति यथोपगतो गोभिरुपगुरिति । एवमनुमानादिषु द्र
मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति न यु
फलाभावात् । एतस्मिन् व्याख्याने ऽफलमनुमानमिति
कारणम् ? अर्थस्य मितत्वात् । नैष दोषः । मितेन लिङ्गेन
पश्चान्मानं भवति यत इत्यर्थः । भवतु वाऽयमर्थो लैङ्गिकी
पत्तिरनुमानमिति । ननु च फलाभावो दोष उक्तः ? न दो

(१) नियमे ऽपि—पा० ३ पु० ॥

१ सूत्रघटक प्रत्यक्ष शब्दे ऽव्ययीभावः समास

हानोपादानोपेक्षाबुद्धीनां फलत्वात् । सर्वं च प्रमाणं स्वविषयं प्रति भावसाधनं प्रमितिः प्रमाणमिति । विषयान्तरं प्रति करणसाधनं प्रमीयतेऽनेनेति प्रमाणम् । यदि भावसाधनः प्रमाणशब्दः किं फलं विषयस्याधिगतत्वात् । उक्तं फलं हानादिबुद्धय इति । ज्ञाते तद्भावात् । ज्ञाते खल्वर्थे त्रिधा बुद्धिर्भवति हेयो वोपादेयो वोपेक्षणीयो वेति । केचित्तु सन्निकर्षमेव प्रत्यक्षं वर्णयन्ति । न तन्न्याय्यं प्रमाणाभावात् । सन्निकर्ष एव प्रमाणमिति न प्रमाणमस्ति । उभयं तु युक्तं परिच्छेदकत्वात् । उभयं परिच्छेदकं सन्निकर्षो ज्ञानं च । एकान्तवादिनस्तु दोष इति । सामीप्यमानमुपमानमिति न युक्तम् । उपमानस्यान्यथाव्याख्यानात्(१) । समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ(२) इत्युक्तमिदानीं तूच्यते सामीप्यमानमुपमानमिति व्याघातः । नास्ति व्याघातः सामीप्यमानेन समाख्यासम्बन्धप्रतिपत्तेरिष्टत्वात् । यस्मादयमुपयुक्तोपमानो गोदर्शी आगमप्रत्ययाहितस्मृतिपूर्वकं गवा सादृश्यं प्रत्यक्षेण प्रतिपद्यास्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते तस्मान्न व्याघात इति । शब्दविषया प्रतिपत्तिः शाब्दप्रमाणं, फलं तदेव ।

केचित्तु क्रमप्रयोजनं वर्णयन्ति । आदौ प्रत्यक्षग्रहणं प्राधान्यात् । तदनन्तरमनुमानं तत्पूर्वकत्वात् । तदनन्तरमुपमानं तत्साधर्म्यात् । अन्ते शब्दो महाविषयत्वात् । तच्चायुक्तमित्यपरे मन्यन्ते । क्रमाभिधानस्य न्यायप्राप्तत्वात् । न्यायप्राप्तं क्रमाभिधानं क्रमवृत्तित्वाद्वाच इति । महाविषयत्वाच्च शब्दस्यादावभिधानप्रसङ्ग इति । एतच्चायुक्तम् । क्रमवृत्तित्वाद्वाचोऽयु-

(१) अन्यथाव्याख्यातत्वात्–पा० ३ पु० ॥
(२) उपमानम्–पा० ३ पु० ॥

गपदभिधानं युक्तं पूर्वापराभिधाने तु न साधनमेतत् । तस्मा न्यायो वक्तव्यः । स चायं न्यायः प्रत्यक्षं पूर्वं प्राधान्यात् महाविषयत्वादादौ शब्दोपदेश इति । न । उभयं महा शब्दः प्रत्यक्षं च । कथमिति ? प्रत्यक्षेणापि सामान्यविशेष ग्रहणं शब्देनापि । तत्र किं शब्दस्यादावुपदेशो भवतु स्वित् प्रत्यक्षस्येति ? प्रत्यक्षस्येति युक्तम् । किं कारणम् ? प्रमाणानां प्रत्यक्षपूर्वकत्वादिति । किं पुनरेतानि प्रमाणानि प्लवन्ते अथ प्रतिप्रमेयं व्यवतिष्ठन्त इति ? उभयथा दर्शनं, प्रमाणत इत्यत्रैव दर्शितम् । सेयं प्रमितिः प्रत्यक्षपरेति । प्रमा णाधिगतेऽर्थे आकाङ्क्षाभावात् तत्परा । यथायं लौकिकोऽ ग्निरित्याप्तोपदेशादग्निं प्रत्याहितप्रत्ययस्तं देशं गच्छति । प्रत्य दत् पुनर्धूमविशेषणं धूमाङ्गत्वेन व्यवस्थितं हुतभुजं प्रतिप आसन्नतरस्त्विदानीमिन्द्रियार्थसन्निकर्षादग्निप्रत्ययं करोति । निराकाङ्क्षो भवतीत्यतः प्रधानं प्रत्यक्षमिति । यत्र संप्लवस्तत्रै यत्र पुनर्व्यवस्था तत्र गुणप्रधानता न चिन्त्यत इति ।

इति त्रिसूत्रीवार्त्तिकम्(१) ॥ ३ ॥ प्रत्यक्षलक्षणम्

अथ विभक्तानां लक्षणवचनमिति तत्र प्रत्यक्षलक्षणमुच्य २-१ इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि सूत्रम् ॥

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभि चारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

सूत्रार्थः समानासमानजातीयविशेषकत्वम् । अथ पद मर्थः कः, इन्द्रियार्थसन्निकर्षोत्पन्नमिति ? इन्द्रियेणार्थस्य न्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षमिति । इन्द्रियाणि पुनर्वक्ष्य

(१) इति श्रीपरमर्षिभारद्वाजश्रीमदुद्द्योतकरन्यायावार्त्तिके न्यायत्रिसूत्रीवार्त्तिकं सम्पूर्णम्—पा० ३ पु० ॥

णानि । अर्थश्च । सन्निकर्षः पुनः षोढा भिद्यते । संयोगः, सं-
युक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायो,
विशेषणविशेष्यभावश्चेति । तत्र चक्षुरिन्द्रियं, रूपवान् घटादिर-
र्थः । तेन सन्निकर्षः संयोगस्तयोर्द्रव्यस्वभावत्वात् । अद्रव्येण
च तद्गतरूपादिना संयुक्तसमवायः । यस्माच्चक्षुषा संयुक्ते द्रव्ये
रूपादि वर्तत इति । वृत्तिस्तु समवायः । रूपादिवृत्तिना सामा-
न्येन संयुक्तसमवेतसमवायः सन्निकर्षः । एवं घ्राणादिषु गन्ध-
वदादिद्रव्येण संयोगः । तत्समवेतेषु गन्धादिषु संयुक्तसमवायः
तद्वृत्तिषु च सामान्यादिषु संयुक्तसमवेतसमवायः । शब्दे समवायः ।
अयं खलु शब्दः संयोगविभागयोनिराद्यः । तत्र कतमः शब्दः
संयोगयोनिः कतमश्च विभागयोनिरिति ? आकाशगुणत्वात् श-
ब्दस्याकाशवृत्तिः संयोगः कारणं गुणकर्मस्वारब्धव्येषु सापेक्ष
इति सापेक्षो न निरपेक्ष इति । किमपेक्षते ? भेर्याकाशसंयोगः
तावत् शब्दस्य कारणं तस्यानुग्राहको भेरीदण्डसंयोगो दण्डग-
तवेगापेक्ष इति । यदि पुनर्भेरीदण्डसंयोग एव शब्दस्य कारणं
स्यात् व्यधिकरणः संयोगः शब्दकारणमिति सर्वत्रोत्पत्तिप्रस-
ङ्गः । विभागाच्छब्दः वंशदलविभागानुगृहीताद् वंशदलाकाश-
विभागाच्छब्द इति । स उत्पन्नः शब्दः सर्वदिक्कानि शब्दान्तरा-
णि करोति । तान्यपि प्रत्येकं शब्दान्तराणि तावद् यावत् कर्णश-
ष्कुलीप्रत्याकाशदेश इति । यः कर्णष्कुलीप्रत्याकाशदेशे समवैति
स समवायादुपलभ्यते । तद्गतेषु च सामान्येषु समवेतसमवायात् ।
समवाये चाभावे च विशेषणविशेष्यभावादिति । सोऽयं सन्निक-
र्षशब्दः संयोगसमवायविशेषणविशेष्यभावव्यापकत्वादुपात्त इति ।
सोऽयं सन्निकर्षः प्रत्यक्षस्य कारणं भवतीति लक्षणत्वेनोच्यते ।
यदीन्द्रियार्थसन्निकर्षः प्रत्यक्षस्य कारणत्वादुपदिश्यते असत्प-

मिदमुच्यते अन्यान्यपि बहूनि सन्ति तान्यपि वक्तव्यानि यथा। आत्ममनःसंयोगः, इन्द्रियमनःसंयोगो, विषयप्रकाशसं विषयस्थं रूपं, विषयसंयोगिस्थं च महत्त्व,मनेकद्रव्यवत्त्वं, ऽविफलः(१) संस्कार इति। कस्मात्? तद्भावे भावात् तदभावे भावादिति। तद्यदि कारणभावादिन्द्रियार्थसन्निकर्षग्रहणमेवमेता पि कारणानि वक्तव्यानि। न वक्तव्यानि। नेदं कारणाभिधा णार्थं सूत्रमपि तु समानासमानजातीयविशेषणार्थम्। यस्य स्यासाधारणं कारणं तदभिधीयते न पुनः साधारणं निवर्त्यत इति। इन्द्रियमनःसंयोगस्तर्ह्यसाधारणत्वादुपसंख्ये यमनुमानादिज्ञानानां कारणं भवति। न। अनेनैव तस्योक्त इन्द्रियार्थसन्निकर्षग्रहणेनेन्द्रियमनःसंयोग उक्तो वेदितव्यः किं कारणम्? उभयोरसाधारणत्वात्। न च यावदसाधारणं तावत्सर्वमभिधातव्यमित्यर्थः। अपि त्वन्यतरेणापि इति अन्यतरोपादानम्। इन्द्रियार्थसन्निकर्षग्रहणं वा कत्वात्। यदिन्द्रियार्थसन्निकर्षादुपजायते विज्ञानं तस्य रद्विशेषकं भवति। इन्द्रियमर्थौ वा तद्विशेषकं तेन न ज्ञात् यस्मादिदं ज्ञानमिन्द्रियेण वा व्यपदिश्यते अर्थेन वा विज्ञानमिति चक्षुर्विज्ञानमिति वा। न पुनरिन्द्रियमनःसं व्यपदिश्यते। न हि भवति रूपालम्बने ज्ञाने मनोज्ञानमिति यदा त्वात्ममनःसंयोगान्मानस्यो बुद्धयः प्रवर्तन्ते तदात्मना पदिश्यन्ते मनसा च। यच्चासाधारणं तद्व्यपदेशभाग् भ तद्यथा। ऋत्वादिकारणसन्निधानात् प्रादुर्भवन्नङ्कुरो न भिर्व्यपदिश्यते, अपि त्वसाधारणेन बीजेन व्यपदिश्यते ङ्कुर इति तथेहापीत्यदोषः। इन्द्रियमनःसंयोगस्य वाऽप्र

(१) हेतुः—पा० २ पु०।

ऽभेदात् । यस्मात् प्रत्यक्षज्ञानभेदे इन्द्रियमनःसंयोगो न भिद्यत इति । यच्चाभेदादग्रहणं इन्द्रियार्थसन्निकर्षस्यापि तर्ह्यग्रहणम् एकेन्द्रियग्राह्येषु अभेदादिति प्राप्तं यथा शुक्लो गौर्गच्छतीति ? । न वक्तव्यम्(१) । उक्तोत्तरत्वात् । उक्तोत्तरमेतत् । नेदं कारणावधारणार्थं सूत्रमिति । अनभ्युपगमाच्च । इन्द्रियमनःसंयोगस्य चाऽग्रहणं समानत्वात् । केन समानत्वादिति वाच्यम् । आत्ममनःसंयोगेन समानत्वात् । किं पुनस्तत् ? व्यपदेशाभाव इत्युक्तम् । अतीन्द्रियाधारता वा सामान्यं, यथाऽऽत्ममनःसंयोगोऽतीन्द्रियाधार एवमिन्द्रियमनःसंयोगोऽपीति । विषयाव्यापित्वं वा । यथाऽऽत्ममनःसंयोगो विषयाव्यापि तथेन्द्रियमनःसंयोगोऽपीति । मनोव्यापित्वं वा । यथा वाऽऽत्ममनःसंयोगो मनोव्यापिरेवमिन्द्रियमनःसंयोगोऽपीति । तस्मादिन्द्रियमनःसंयोगस्याऽऽत्ममनःसंयोगेन सामान्यादन्यतराभिधानेन वा चरितार्थत्वादनभिधानमिति ।

इन्द्रियार्थसन्निकर्षोत्पन्नमित्ययुक्तम् इन्द्रियस्याप्राप्यकारित्वात् । अप्राप्यकारिणी चक्षुःश्रोत्रे इत्येके । तत्र च न्यायं ब्रुवते । अप्राप्यकारि चक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्चेति । सान्तरस्यार्थस्य विप्रकृष्टदेशावस्थितस्य ग्रहणं दृष्टम् । न च चक्षुषस्तेनार्थेन प्राप्तिरस्ति । भूतविशेषस्येन्द्रियभावात् । य एवायं कृष्णसारलक्षणो भूतविशेषः स बाह्यभूतविशेषप्रसादानुगृहीतस्तत्तृष्णापूर्वककर्मापेक्षः चक्षुरित्युच्यते । तथा चोक्तम् । "रूपोपलब्धिसंवर्तकेन कर्मणा तत्तृष्णापूर्वकेन चक्षुरभिनिर्वृत्तमतो रूपोपलब्धेः कारणं भवतीति" । एवं शेषेषु । न च भूतविशेषानुगृहीतस्य गोलकस्य प्राप्तिर्विषयेणास्ति । तस्मात् सा-

(१) न वक्तव्यः इति टीकासंमतः पाठः ।

५

न्तरग्रहणादप्राप्यकारीति । अपरे तु सान्तरग्रहणं हेतुं [वर्ण]यन्ति । न हि प्राप्यकारिषु घ्राणादिषु सान्तर इति ग्रहणं दृष्टं तु चक्षुषि । पृथुतरग्रहणाच्च । राष्ट्रनगरादिरूपं च महदुप[लभ्य]ते । न चाक्ष्णोस्तथा पृथ्वत्रभास इति युक्तम् । दिग्दे[श]देशाच्च । यदि प्राप्यकारि चक्षुर्भवेत् दिग्देशव्यपदेशो न स्या[त्] न हि प्राप्यकारिषु घ्राणादिषु तद्भवति । सन्निकृष्टविप्रकृष्ट[यो]स्तुल्यकालग्रहणाच्च । यत् खलु गतिमद्भवति तत्तां गतिमा[श्रित्य] सन्निकृष्टमाशु प्राप्नोति विप्रकृष्टं चिरेण । शाखाचन्द्रमसो[स्तु]ल्यकालग्रहणं दृष्टं तस्मादप्राप्यकारीति । यत् तावत् [सान्त]रग्रहणादिति, तदयुक्तं विकल्पानुपपत्तेः । सान्तरग्रहणमिति [को]ऽर्थः ? किं तावत्सान्तरस्याप्राप्तस्य ग्रहणमित्ययमर्थः, आहो[स्वित्] सहान्तरेण ग्रहणं सान्तरग्रहणमिति । अस्तु तावत् पूर्वः [पक्षः] अप्राप्तस्य ग्रहणं सान्तरग्रहणमिति । नन्वयं प्रतिज्ञार्थ एव [इति] हेत्वभावः । किं कारणं ? हेत्वर्थस्य प्रतिज्ञार्थेनाऽऽक्षिप्त[त्वात्] एतदुक्तं भवति । अप्राप्यकारि चक्षुः अप्राप्यग्रहणादिति [प्र]तिज्ञार्थान्न भिद्यते । अथ ब्रूषे सहान्तरेण ग्रहणमिति । किं ह [सहा]नाम ? यच्चक्षुषा विषयेण सहोपलभ्यते इति । किमाकाश[म् अभा]वो द्रव्यान्तरं वा । यद्याकाशं तन्न चक्षुषो विषयः । न [ह्या]काशं चक्षुषा गृह्यते अरूपित्वात् वाय्वादिवत् । अथ रूपवद्द्रव्य[मन्त]रशब्दवाच्यं तस्य व्यवधायकत्वात् तेन सह ग्रहणमनुप[पन्नम्] अथाभावोऽन्तरशब्दवाच्यः ? स स्वतन्त्रश्चक्षुर्विषयो न भ[वति] तेन सहोपलब्धावनैकान्तिकम् । न चान्या गतिरस्ति । [त]च्छून्यमभिधानं सान्तरग्रहणादिति । यैरपि विद्वस्यमानैः(१) [सान्त]रग्रहणादित्यस्य सान्तर इति ग्रहणमित्येतद्व्याख्यानं क्रि[यते]

(१) लोहितादिडाज्भ्यः क्यष् इति क्यषन्तस्य रूपम् ।

तदप्ययुक्तम् । सान्तर इति ग्रहणस्यान्यनिमित्तत्वात् । अन्यथैतत्सान्तर इति ग्रहणं भवति । शरीरावधिनिमित्तत्वात् । शरीरमवधिं कृत्वा सान्तरनिरन्तरे भवतः । न पुनरिन्द्रियप्राप्त्यप्राप्तिनिमित्ते भवतः । यत्र शरीरमिन्द्रियं चोभयमर्थेन सम्बद्ध्यते तत्र निरन्तर इति ग्रहणं भवति । यत्र पुनरिन्द्रियमात्रं सम्बद्ध्यते तत्र सान्तर इति । तस्मात् सान्तर इति ग्रहणस्यान्यनिमित्तत्वान्न सान्तरमिति ग्रहणादप्राप्यकारिता सिद्ध्यतीति । यदपि पृथुतरग्रहणादिति, तदप्ययुक्तम् । सम्बन्धमात्रेण महदण्वोर्ग्रहणात् । सम्बन्धमात्रेणैव महति वाऽणौ वा विषयभेदानुविधायी प्रत्यय उपजायते तस्माददेश्यमेतदपीति । यत्पुनरेतदुक्तं दिग्देशव्यपदेशादिति, तदपि शरीरावधिनिमित्तत्वात् प्रत्युक्तम् । यत्रेन्द्रियं शरीरं चार्थेन सम्बद्ध्यते तत्र दिग्देशव्यपदेशो न भवति । दूरान्तिकानुविधानं वा । यत्र त्विन्द्रियमेव केवलं सम्बद्ध्यते तत्र शरीरमवधिं कृत्वा संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं वाऽपेक्ष्यमाणस्य दिग्देशप्रत्ययाः सन्निकृष्टविप्रकृष्टप्रत्ययाश्च भवन्ति । यत्पुनरेतत् शाखाचन्द्रमसोः तुल्यकालग्रहणादिति, तदपि न । अनभ्युपगमात् । को हि स्वस्थात्मा शाखाचन्द्रमसोस्तुल्यकालग्रहणं प्रतिपद्यते । कालभेदाग्रहणान्मिथ्याप्रत्यय एष उत्पलदलशतव्यतिभेदवदिति । कथं पुनरवगम्यते कालभेदाग्रहणनिमित्त एष युगपत्प्रत्ययो न पुनरेककाल एव ? इदमनुमानं आवरणानुपपत्तेरिति । यद्यप्राप्यकारि चक्षुर्भवति न कुड्यकटादेरावरणस्य सामर्थ्यमस्तीत्यावरणानुपपत्तिः स्यात् । न च व्यवहितार्थोपलब्धिरस्ति । तस्मान्नाप्राप्यकारीति । दूरान्तिकानुविधानं चानुपलब्ध्युपलब्ध्योर्न स्यात् अप्राप्य चक्षुरर्थं गृह्णातीति यदिदमस्य दूरे अग्रहणमन्तिके च ग्रहणमुभयमेतन्न

स्यात् । दृष्टं तु, तस्मान्नाप्राप्यकारीति । विषयीभावादिति चे-न । सम्बन्धमन्तरेण विषयीभावानभ्युपगमात् । अथापीदं स्या-यः चक्षुषोर्विषयीभवत्यर्थः स उपलभ्यते । यस्तु न भवति नासावुपलभ्यते इति । न च व्यवहितानां दूरावस्थितानां चा-चक्षुषो विषयीभावोऽस्ति तस्मान्न ते गृह्यन्त इति । तच्च न सम्बन्धमन्तरेण विषयीभावानभ्युपगमात् । कः सम्बन्धव्यति-रेकेण विषयीभावः ? केवलं भवतः सञ्ज्ञामात्रं भिद्यते इति । मयोच्यते सम्बन्ध इति भवताऽभिधीयते विषयीभाव न कश्चिद् विशेष इति । अथ प्राप्यकारित्वे चक्षुषः किं कार-णम् ? इन्द्रियत्वमेव । प्राप्यकारि चक्षुरिन्द्रियत्वात् घ्राणा-वत् । घ्राणादीन्द्रियं प्राप्तकारि दृष्टं तथा च चक्षुस्तस्मात् प्राप्य-कारीति । अथ पुनर्न किञ्चिदिन्द्रियं प्राप्यकारि प्रतिपद्यते-सर्वाणि पक्षीकृत्य करणत्वादिति वाच्यम् । करणं वास्या-प्राप्यकारि दृष्टं तथा चेन्द्रियाणि तस्मात् प्राप्यकारीणीति । पुनर्नैयायिकात् सर्वानेवार्थानप्राप्यकारिणः प्रतिपद्यते तदा-सोऽपि दृष्टसामर्थ्यानां कारणानां सर्वत्र कार्यानुत्पत्त्या प्रत्य-यः । यदि खल्वेतानि कारणानि परस्परप्राप्त्यनपेक्षाणि स्व-पजातशक्तिकानि कार्यमारभन्त इति कस्मात् कार्यं सर्वत्र न भवतीति वक्तव्यं अतो न कारणमप्राप्यकार्यस्तीति । -ण्डचक्राद्युदाहरणं, लोक इति । तस्माद्व्यवस्थितमेतदिन्द्रि-न्निकर्षोत्पन्नं ज्ञानमिति ॥

अथ ज्ञानग्रहणं किमर्थं ? सुखादिव्यवच्छेदार्थम् । इन्द्रि-न्निकर्षात् सुखदुःखे अपि भवतः तद्व्युदासार्थमाह ज्ञानमि-तच्चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयनामधेयेनाभिधीयते इति-म् । तत्प्रतिषेधार्थमाह अव्यपदेश्यमिति । यदिदमनुपयुक्त-

र्थसम्बन्धस्य विषयभेदानुविधायि विज्ञानं तत्प्रत्यक्षं, कृतशब्दार्थसम्बन्धस्यापि तदुत्पत्तिकाले तादृगेव। अपरे त्वव्यपदेश्यमित्यनेनानुमानं निराकुर्वन्ति । तच्च नैवम् । कस्मात् ? इन्द्रियार्थसन्निकर्षोत्पन्नमिति वचनात् । न ह्यनुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति । अतो न प्रसङ्गोऽनुमान इति । ग्रीष्मे मरीचय इति भाष्यम् । तत्प्रतिषेधार्थमिदमुच्यते अव्यभिचारीति । किमिदं व्यभिचारीति ? यदतस्मिंस्तदिति भवति । किं पुनरत्र व्यभिचारि किमर्थः आहो ज्ञानमिति । एके तावद्वर्णयन्ति । अर्थस्य व्यभिचारः अर्थस्तु तथा न भवतीति, तद्व्यभिचारात् तद्विषयं ज्ञानमपि व्यभिचारीत्युच्यते इति । तच्च नैवम् । कस्मात् अर्थस्य तथाभावात् । यत्तदुदकादिज्ञानमुपजायते मरीचिषु स्पन्दमानेषु न तत्रार्थो व्यभिचरतीति । न हि ते न मरीचयो न वा स्पन्दन्ते किन्तु ज्ञानं व्यभिचरति । अतस्मिंस्तदिति भावादिति । न हि तत्रोदकमस्ति । तांस्तु मरीचीनिन्द्रियोपघातदोषादिन्द्रियेणालोच्य विपर्येति इति ज्ञानस्य व्यभिचारो नार्थस्येति । दूरात् चक्षुषाऽर्थं पश्यन्नावधारयतीति भाष्यम् । तद्व्युदासार्थमाह व्यवसायात्मकमिति । न । संशयस्यानिन्द्रियार्थसन्निकर्षपूर्वकत्वात् । न हीन्द्रियार्थसन्निकर्षात् संशयज्ञानं भवति किन्तु मानसः प्रत्ययः । संशीतिः संशय इति । तच्च नैवम् । संशयस्योभयनिमित्तत्वात् । उभयन्तु संशयस्य निमित्तम् आत्माऽन्तःकरणसंयोग इन्द्रियार्थसन्निकर्षश्चेति । तत्र यदिन्द्रियार्थसन्निकर्षानवधारणपूर्वकं मनसाऽनवधारणं तदिह सम्बध्यते । तस्य हीन्द्रियार्थसन्निकर्षः कारणम् । पूर्वं तु न सम्बध्यते । यदात्मान्तःकरणसंयोगाद्भवतीति । तस्मादस्ति विषयो विशेषणस्येति युक्तं व्यवसायात्मकमिति ।

इन्द्रियार्थसन्निकर्षोत्पन्नमित्येवमादिलक्षणमात्मादिषु दिषु च नास्ति मनसोऽनिन्द्रियत्वादव्यापकमेतत् क्षलक्षणमिति । कथं पुनरिन्द्रियं मनो न इन्द्रियसूत्रेऽपठितत्वात् । परिपठितानि घ्राणादीनि णि । न च तेषु मनः पठितम् । तस्मान्मनो न्द्रियम् । पृथक् चानभिधानान्नास्ति मनस इन्द्रियत्वे ततश्च नेन्द्रियं मनः । न चैवं प्रत्यक्षाः सुखादयो भवि ति । प्रत्यक्षाश्चैते नानुमानिकाः लिङ्गाभावात् । न ङ्गमन्तरेणानुमेयार्थो गम्यते । नाप्यन्यत् प्रमाणं प्रतिपाद सुखादीनाम् । न च तेषामनुमेयत्वम् । न चान्या गति तस्मात्कर्तव्यं सुखादीनां प्रत्यक्षेण ग्रहणोपसंख्यानमि श्चैवमाह न प्रत्यक्षाः सुखादय इति ? इन्द्रियार्थसन्निकर्ष प्रत्यक्षत्वाद्याह । नैष दोषः । मनस इन्द्रियत्वादिन्द्रियार्थ षोत्पन्नं सुखादिज्ञानमिति । यत्तु सूत्रेऽनभिधानं तद्वै किं तद्वैधर्म्यं ? सर्वविषयत्वासर्वविषयत्वे । सर्वविषयं विषयाणीतराणि । सर्वविषयं तु मनः स्मृतिकारणसंयो त्वात् आत्मवत् सुखग्राहकसंयोगाधिकरणत्वात् समस्तं धिष्ठातृत्वाच्च आत्मवत् । भौतिकाभौतिकत्वं तु न, हि न हि भौतिकं मनो नाप्यभौतिकमिति । कार्यधर्मो तिकत्वमभौतिकत्वं च । न च कार्यं मनः । तस्मान्न भौति प्यभौतिकमिति । श्रोत्रे चासम्भवः यदि भौतिकत्वाभौति क्षणाद्वैधर्म्यादपरिपाठः सूत्रे मनसः, श्रोत्रमपि सूत्रे न र्हि, न हि श्रोत्रं भौतिकं नाप्यभौतिकमिति । स्वार्थ यविधानमिति चेन्न । न । प्रत्ययवैयर्थ्यात् । स्यादे स्वार्थिक एष प्रत्ययो भूतमेव भौतिकमिति । तच्च न ।

वैयर्थ्याद् । न हि भौतिकमित्यनेन कश्चित्तद्धितार्थो लभ्यते । तस्माद् व्यर्थमेतत् स्वार्थे प्रत्ययविधानमिति । यत्पुनरेतत् पृथगभिधानं नास्तीति । न नास्ति युगपज्ज्ञानानुपपत्तेरिति । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यते । तेन च प्रतिपादितमेतन्मनसः करणत्वमिति ? सगुणानामिन्द्रियभावो वैधर्म्यमित्येतदप्ययुक्तम् । श्रोत्रानाभिधानप्रसङ्गादेव । तस्मात् सर्वविषयत्वासर्वविषयत्वमेव वैधर्म्यमित्येतदेव ज्यायः । तन्त्रान्तरसमाचाराच्च । तन्त्रान्तरे मन इन्द्रियमिति पठ्यते । तच्चेह न प्रतिषिध्यते । अप्रतिषेधादुपात्तं स्यादिति ? न । शेषाभिधानवैयर्थ्यात् । शेषाण्यपीन्द्रियाणि तैः परिपठितानि तस्मात् तान्यपि न वक्तव्यानि यद्यप्रतिषेधादुपादानं स्यादिति । न । तन्त्रयुक्त्यनवबोधात् । न भवता तन्त्रयुक्तिः परिज्ञायते । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः । न च यस्य स्वमतपरिग्रहो नास्ति तस्य स्वमतं परमतं वा भिद्यते । भवता च परमतानुरोधेन सर्वं स्वमतं निवार्यत इति । तन्निवारणात् स्वमतं परमतमित्येतदेव न स्यात् । तस्मादस्ति मन इन्द्रियं चेति । तदुपपन्नमिन्द्रियार्थसन्निकर्षोत्पन्नं सुखादिज्ञानमिति व्यापकं लक्षणम् ।

समस्तमसमस्तं चेति सन्देहः । किमिदं प्रत्यक्षलक्षणं समस्तमाहो असमस्तमिति सन्देहः, कुतः ? उभयथा दर्शनात् समस्तं लक्षणं भवति व्यस्तं च । इच्छाप्रयत्नद्वेषसुखदुःखज्ञानान्यात्मनो लिङ्गमिति व्यस्तलक्षणमेकशः प्रतिपादकत्वात् । तथा समानानेकधर्मोपपत्तेरित्येवमादि व्यस्तम् । समस्तं पुनः वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति । समस्तेनानेन छलं लक्ष्यते । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति च । लक्षणं चेदमतः सन्देहः किं समस्तमुतासमस्तमिति । समस्तमित्याह । यस्मादेकशोऽनुमानसुखशाब्दविपर्ययसंशयज्ञानानि निवर्त्यन्त इति । यदीन्द्रियार्थ-

सन्निकर्षोत्पन्नमित्याद्येकशः पदमभिधीयते । योऽयमेकेन
सङ्गृहीतः स प्रत्यक्षः स्यादिति तेन पूर्वोक्तानामनुप
प्रत्यक्षत्वप्रसङ्गः स्यादिति । एवं द्वयोः पदयोः उपा
द्वयोपात्तस्य प्रत्यक्षत्वप्रसङ्गः । एवं त्रयाणां पदानां
तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः । एवं चतुर्णां पदानां
तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः । तस्मादेकद्वित्रिचतुष्पदप
पञ्चपदपरिग्रहेण त्रिंशत्कोटीर्व्युदस्य समस्तं लक्षणमि
तत्रैकपदपरिग्रहेण तावत्पञ्च कोटयः, द्विपदपरिग्रहेण द
पदपरिग्रहेणापि दशैव, चतुःपदपरिग्रहेण पञ्च । एक
पुनः समस्तपरिग्रहेणोपात्तेति । कस्मात् ? विशेषवि
धयोः शेषप्रतिषेधविध्यभ्यनुज्ञाविषयत्वात् । अयं खलु वि
धिः प्रवर्तमानः शेषं प्रतिषेधति यथा दक्षिणेनाक्ष्णा प
विशेषप्रतिषेधश्च शेषाभ्यनुज्ञाविषयो भवति । यथा वा
न पश्यतीति । तथेहाप्येकदेशाभ्युपगमे शेषप्रतिषेधः
वा गम्यत इति व्यवस्थितं प्रत्यक्षमिति ।

अपरे पुनर्वर्णयन्ति—ततोऽर्थाद्विज्ञानं प्रत्यक्ष
तच्च । ततोऽर्थादिति यस्यार्थस्य यद्विज्ञानं
यदि तत एव तद्भवति नार्थान्तराद्भवति तत्
एतेनानुमानादिज्ञानमपक्षिप्तं भवति । न हि त
तद्भवति । किं तर्हि ? ततश्चान्यतश्च तद्भवति । तत्र
हणं न कर्तव्यमिति । ततो विज्ञानमित्युच्यमाने गम्यत ए
दिति । अवधारणार्थोऽर्थशब्द इति चेत् । स्यान्मतिरव
णार्थोऽर्थशब्दो भविष्यतीति । यदुक्तं भवति तत एवा
भवति ततोर्थादिति । तन्न युक्तमेकपदस्यावधारणार्थस्य
त् । अम्भक्ष(१) इति यथा । एतेनानुमानादिज्ञ

(१) अनुस्वाररहितो 'ऽब्भक्ष' इति टीकाकारसम्मतः

प्रत्युक्तः । यत् पुनरेतत् संवृतिज्ञानमनेनापक्षिप्तमिति तदेतन्न बुध्यामहे कथं तदपाक्षिप्तमिति । यदि ब्रूषे रूपादिभ्य उत्पन्नं ज्ञानं घटस्य व्यपदिश्यते न ततो भविष्यतीत्यपक्षिप्तं, तन्न युक्तम् । न हि रूपादिभ्य उत्पन्नं ज्ञानं घटस्य व्यपदिश्यते । रूपादिभ्य उत्पन्नं रूपादीनां घटादिभ्य उत्पन्नं ज्ञानं घटस्येति न प्रसङ्गः । अथा-प्येवं मनोरथो न रूपादिभ्यो व्यतिरिक्ताः पटादय इति । मनो-मोदकोपभोगमात्रमेतत् । यथा तद्व्यतिरिक्ता घटादयः तथोप-रिष्टाद्वक्ष्यामः । सर्वं च स्वविषयाद् विज्ञानं भवतीति ? ततोऽग्रह-णमनर्थकमिति । ननु च(१) मिथ्याज्ञानमतस्मादपि भवति । न ह्यतस्माच्चद्भवतीति । किं तर्हि ? अतस्मिंस्तद्भवतीति । न भवता मिथ्याज्ञानमपि व्यज्ञायि । ततो ग्रहणमर्थग्रहणं चान्तरेण विज्ञान-मात्रमवशिष्यते । तथा च न लक्षणमुक्तं स्यात् । सर्वं च ज्ञानं प्रत्यक्षं स्यात् । यद्यप्येतत्सूत्रं यथाश्रुति भवति तथापि ग्राह्यग्रा-हकज्ञानयोरयुगपद्भावाज्ज्ञानं अप्रत्यक्षं स्यात् । नाशोत्पादौ सममिति चेत् । तच्च न, उदाहरणाभावात् । न हि समं नाशो-त्पादे किञ्चिदुदाहरणमस्ति । विनष्टश्चार्थः प्रत्यक्ष इति स्यात् । तुल्यमिति चेत्—स्यान्मतिर्भवतां युगपदवस्थाने किमुदाहरणमिति । तच्च नैवमुक्तोत्तरत्वात् । उक्तोत्तरमेतत् स्फटिकादिसूत्र इति ।

अपरे तु मन्यन्ते प्रत्यक्षं कल्पनापोढमिति । अथ केयं कल्पना नाम ? जातियोजनेति । यत् किल न नाम्नाऽभिधीयते न च जा-त्यादिभिर्व्यपदिश्यते विषयस्वरूपानुविधायि परिच्छेदकमात्मसंवेद्यं तत् प्रत्यक्षमिति । ते इदं प्रष्टव्याः । अथ प्रत्यक्षशब्देन कोऽर्थो-ऽभिधीयते इति ? यदि प्रत्यक्षं ? कथमवाच्यम् । अथ न प्रत्यक्षं ? अवाचकस्तर्हि प्रत्यक्षशब्दः । अथ प्रत्यक्षशब्देन सामान्यमुच्यत

(१) सर्वत्र—इत्यधिकम् २ पु० ॥

इति ? एतदपि सामान्यं किं प्रत्यक्षव्यतिरेक्याहोस्विदव्यतिरे यदि प्रत्यक्षव्यतिरेकि ? न प्रत्यक्षमुक्तम् । अथाव्यतिरेकि नोक्तम् । कल्पनापोढशब्देनापि यदि प्रत्यक्षमुच्यते व्याघातः । अथ नोच्यते तथापि कल्पनापोढवचनं व्यर्थं, प्रत्य ल्पनापोढमिति च वाक्यम् । अथास्य वाक्यस्य कोऽर्थो ? प्र त्यक्षं ? व्याघातः । कथं ? प्रत्यक्षं कल्पनापोढमिति चाने क्येनाभिधीयते । न चाभिधेयमिति कोऽन्यो भदन्ताद्ब्रवी अथ न प्रत्यक्षमस्यार्थः वर्णोच्चारणमात्रं तर्ह्येतद्वाक्यं प्रत्य नापोढमिति । अनित्यादिशब्दविषयत्वाच्च न सर्वथाऽवाच्य अनित्यं प्रत्यक्षं दुःखशून्यमनात्मकं च प्रत्यक्षमित्येषां चेच्छ विषयतामुपयाति कथमवाच्यम् । अथ नोपैति ? सर्वं संस्कृ मित्येतत्तथागतेन नाख्यातव्यम् । अथ स्वरूपतो न व्यपदे त्येष कल्पनापोढशब्दार्थः ? सर्वे ऽर्थाः तर्हि प्रत्यक्षाः न्ति । किं कारणम् ? न हि कश्चित् सुशिक्षितोऽपि पद स्वरूपं निर्देष्टुं शक्नोति । असामायिकत्वात् । सर्वस्य च द्वावाकारौ सामान्याकारो विशेषाकारश्च । तत्र वस्तु सा नेनाकारेणाभिधीयते न विशेषाकारेण । विशेषानभिधान भवति । न हि मनुष्यशब्दस्य ब्राह्मणो न वाच्यः । ये तु साधारणधर्माः पुरुषान्तरव्यावृत्तप्रत्ययहेतवो न च तैः धानान्नोक्तो भवति । एवं ज्ञानमपि(१) सामान्यविशेषा तस्य विशेषाकारेण नाभिधानं सामान्याकारेण त्वभिधा यदि च विशेषाकारेणानभिधानं यत्र तल्लक्षणं प्रत्यक्षस्य वलं प्रत्यक्षस्य त्रैलोक्यस्यैतल्लक्षणमिति । एवं प्रत्यक्षलक्षण

(१) अत्रादर्शपुस्तकं कृमिभक्षितमिति 'ज्ञान'मित्यक्षर कादर्शनात् समुद्धृतम् ॥

स्यात् । अथ कल्पनापोढशब्देन प्रत्यक्षस्य स्वरूपमभिधीयते ? एवमप्यनिवृत्तो व्याघातः स्वरूपं चानभिधेयं इत्यनेन शब्देनाभिधीयते इति । अथानेन शब्देन नैव किञ्चिदभिधीयते । किमस्य शब्दस्योच्चारणसामर्थ्यं प्रत्यक्षं कल्पनापोढमिति । अप्रतिपादकत्वान्मूकस्वप्नसदृशमेतत् । एवं यथायथेदं लक्षणं विचार्यते तथातथा न्यायं न सहत इति । "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्ष"मिति(१) एतदपि संशयाद्युत्पत्तिनिमित्तत्वादलक्षणमिति । तथा चोक्तं प्रत्यक्षसूत्रं वर्णयद्भिरिति । एतेन प्रत्यक्षमिन्द्रियार्थसन्निकर्षमनःप्रकाशविशेषेषु सत्स्विति प्रत्युक्तम् । तथा श्रोत्रादिवृत्तिरिति । किं कारणम् ? पञ्चपदपरिग्रहेण प्रत्यक्षलक्षणमुक्तं यत्रान्यतरपदपरिग्रहो नास्ति तत्प्रत्यक्षाभासमिति । एवमनेन न्यायेन यान्यप्यनुक्तानि लक्षणानि तान्येतस्माल्लक्षणान्न भिद्यमानानि न लक्षणानीति । व्याख्यातं प्रत्यक्षलक्षणमिति ॥

**अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥ ५ ॥**

अथ तत्पूर्वकं त्रिविधमनुमानमिति । अथेत्यानन्तर्ये । अनुमानविशेषणार्थं सूत्रं तत्पूर्वकमिति । अनेन समानासमानजातीयेभ्योऽनुमानं व्यवच्छिद्यत इति । तानि ते तद् पूर्वं यस्य तदिदं तत्पूर्वकम् । यदा तानीति विग्रहः तदा समस्तप्रमाणाभिसम्बन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितं भवति । पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठत इति तत्पूर्वकत्वमुक्तं भवति । यदापि विवेकात्(२) ते पूर्वे यस्येति, ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य

(१) जैमिनिसूत्रम् १ अ० १ पा० ४ सू० ॥
(२) अत्रापि 'वेकादि'ति कृमिभक्षितमादर्शपुस्तके ॥

तदिदं तत्पूर्वकं प्रत्यक्षमिति । ते च द्वे प्रत्यक्षे(१) । लिङ्गलि-
म्बन्धदर्शनमाद्यं प्रत्यक्षं, लिङ्गदर्शनं द्वितीयम् । बुभुत्सावतो
याल्लिङ्गदर्शनात् संस्काराभिव्यक्त्युत्तरकालं स्मृतिः स्मृ-
न्तरं च पुनर्लिङ्गदर्शनमयं धूम इति । तदिदमन्तिमं प्रत्यक्षं
भ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूप(२)मनु-
भवति । कः पुनरनुमानार्थः ? अनुमीयतेऽनेनेति करण-
किं पुनरस्य फलम् ? अग्निविषया प्रतिपत्तिः । कथं पुन-
विषयं करणं अन्यविषयां क्रियां करोति ? (३)शाल्यादिवि-
मुशलादेः करणस्य श्यामाके ऽभिहतिर्भवति । न अनियमात्
यद्विषयं करणं तद्विषया क्रियेति न नियमोऽस्ति । दृष्टा
क्षादिविषयस्य छेदनस्यावयवे क्रियेति । वृक्षः छिद्यते अवय-
येति । क्वचित् पुनर्यद्विषयं करणं तद्विषयैव क्रिया । तद्यथा त-
ण्डुलाः पच्यन्ते पाकस्तेष्वेव । क्वचित् पुनरात्मैव भवति
करणं क्रिया तस्यैव । तद्यथा वृक्षास्तिष्ठतीति । वृक्षः स्व-
तिष्ठति । किमुक्तं भवत्यात्मनैवेति । यस्मादयं स्वास्थितौ
न्तरं न प्रयुङ्क्ते । एवमन्यविषयस्य करणस्यान्यविषया क्रि-
क्वचित् पुनर्यद्विषयं प्रमाणं तद्विषयैव क्रिया यदा स
प्रमीयते इति । किं पुनस्तस्य प्रमीयते ? प्रमितत्वात् । प्रमी-
हेयत्वेनोपादेयत्वेनोपेक्षणीयत्वेन वाऽवगम्यत इति । तथा
माणफलयोर्विषयभेदानभ्युपगमात् । यदा पुनस्तत्पूर्वं त-
दिदं तत्पूर्वकमिति तदा भेदस्याविवक्षितत्वात् लिङ्गलिङ्गि-
न्धदर्शनानन्तरं लिङ्गदर्शनसम्बन्धस्मृतिभिर्लिङ्गपरामर्शो

(१) कतरे द्वे इति टीकासंमतः पाठः ।
(२) लिङ्गपरामर्शरूपामिति—पाठः १ पु० ॥
(३) न हि इत्यपेक्षितम् ।

ध्यते तस्य तत्पूर्वकत्वात् । किं पुनस्तैरनुमीयते ? शेषोऽर्थ इति । अनुमानमित्यत्र किं कारकं ? भावः करणं वा । यदा भावस्तदा हानादिबुद्धयः फलम् । यदा करणं तदा शेषवस्तुपरिच्छेदः फलमिति ।

लिङ्गलिङ्गिसम्बन्धस्मृतिर्लिङ्गदर्शनं वा इति सन्देहः । एके तावद्वर्णयन्ति लिङ्गलिङ्गिसम्बन्धस्मृतिरनुमानमिति इतरैर्लिङ्गलिङ्गिसम्बन्धदर्शनादिभिरनुगृह्यमाणा । अपरे तु मन्यन्ते लिङ्गपरामर्शोऽनुमानमिति । वयं तु पश्यामः । सर्वमनुमानमनुमितेस्तन्नान्तरीयकत्वात् । प्रधानोपसर्जनताविवक्षायां लिङ्गपरामर्श इति न्याय्यम् । कः पुनरत्र न्यायः ? आनन्तर्यप्रतिपत्तिः । यस्माल्लिङ्गपरामर्शादनन्तरं शेषार्थप्रतिपत्तिरिति । तस्माल्लिङ्गपरामर्शो न्याय्य इति । स्मृतिर्न प्रधानं । किं कारणं ? स्मृत्यनन्तरमप्रतिपत्तेः । न हि भवति यत्र धूममद्राक्षं तत्राग्निमद्राक्षमिति । एतस्याश्च स्मृतेरनन्तरं तस्मादग्निरिति शेषार्थग्रह(१) इति युक्तं वक्तुम् । तस्मात् स्मृत्यनुगृहीतो लिङ्गपरामर्शोऽभीष्टार्थप्रतिपादको भवतीति । एवं चोपनयस्यार्थवत्ता । यदि चायं स्मृत्यनुगृहीतो लिङ्गपरामर्शोऽनुमानं भवति, एवं सत्युपनयोऽर्थवानिति । एवं च सति वाक्याङ्गत्वमुपनयस्योक्तं भवति । तस्माद् व्यवस्थितमेतत् तत्पूर्वकमनुमानमिति । यदि प्रत्यक्षपूर्वकमनुमानं संस्कारे निर्णये च प्रसङ्ग इति । प्रत्यक्षपूर्वको भावनाख्यः स्मृतिहेतुः संस्कारः निर्णयश्च प्रत्यक्षपूर्वकत्वादनुमानं प्रसज्यत इति । नैष दोषो विज्ञानस्याधिकृतत्वात् । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति ज्ञानाधिकारो वर्तत इति तेन न संस्कारे ऽतिप्रसङ्गः । निर्णये तूभयथा कदाचित् प्रमाणं कदाचित् फलम् । स्वविषयपरिच्छेद-

(१) 'शेषार्थग्र' इति कृमिभक्षितमादर्शपुस्तके ।

कत्वात् प्रमाणमिति ।

त्रिविधमिति । अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति । तत्रान्वयव्यतिरेकी विवक्षिततज्जातीयोपपत्तौ विपक्षावृत्तिः अनित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद् घटवदिति । अन्वयी विवक्षिततज्जातीयवृत्तित्वे सति विपक्षहीनो यथा सर्वानित्यत्ववादिनामनित्यः शब्दः कृतकत्वादिति । अस्य हि विपक्षो नास्ति । व्यतिरेकी विवक्षितव्यापकत्वे सति सपक्षाभावे सति विपक्षावृत्तिः । यथा नेदं जीवच्छरीरं निरात्मकम् अप्राणादिमत्त्वप्रसङ्गादिति । अथवा त्रिविधमिति । पूर्ववच्छेषवत्सामान्यतोदृष्टं चेति । पूर्वं साध्यं तद् व्याप्त्या यस्यास्ति तत् पूर्ववत् । साध्यतज्जातीयः शेषः तद्यस्यास्तीति तद् शेषवत् । पूर्ववन्नाम साध्यव्यापकं शेषवदिति समानेऽस्ति । सामान्यतोदृष्टम् । चशब्दात् प्रत्यक्षागमाविरुद्धं चेत्येवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति ।

अथवा त्रिविधमिति । पूर्ववच्छेषवत् सामान्यतोदृष्टं च । तत्र पूर्ववन्नाम यत्र कारणेन कार्यमनुमीयत इति भाष्यम् । किं पुनरिदमुक्तं भवति कारणेन कार्यमनुमीयत इति ? यदि तावदयमर्थः कारणदर्शनात् कार्यं तत्त्वं प्रतिपद्यत इति, तन्नास्ति, न हि कारणं गृहीत्वा कश्चिदात्मा कश्चित् कार्यं प्रतिपद्यत इति तथा च व्याहतं भवति । अथ पुनरेवमनुमीयते यत्र कारणं तत्र कार्यमिति । तदपि नास्ति । कार्यकारणयोर्भिन्नदेशत्वात् । तन्तवः स्वावयवेषु, पटः तन्तुष्विति । कारणदर्शनाच्च कार्यमनुमीयत इति वाणोऽनुमानमुद्रां भिनत्ति । का पुनरियमनुमानमुद्रा ? उपलब्धे न निर्णीते न्यायः प्रवर्तत इति । यदि कारण

कार्यमनुमीयते अनुपलब्धेऽर्थे न्यायः प्रवर्तत इति स्यात्। तथा च व्याहतं स्यात् । नानभ्युपगमात् । क एवमाह कारणदर्शनात् कार्यास्तित्वं प्रतिपद्यत इति । को वा ब्रवीति यत्र कारणं तत्र कार्यमिति । कार्यं तु कारणविशेषणत्वेनोपयुक्तं गुणभूतमनुमीयत इति सूत्रार्थः । तथा च न मुद्राभेद इति । एवं शेषवदादिष्वपि द्रष्टव्यम् । अत्रापि कारणं कार्यस्याङ्गभूतमनुमीयत इति । कथं पुनः शेषशब्देन कार्यमुच्यते ? द्वयोरनुमानभावेनोपक्षिप्तयोः कारणस्योपयोगात् अनुपयुक्तं कार्यमिति कार्यं शेषशब्दवाच्यम् । उदाहरणं मेघोन्नत्या भविष्यति वृष्टिरिति कारणेन कार्यानुमानम् । कथं पुनरस्य प्रयोगः ? वृष्टिमन्त एते मेघाः गम्भीरध्वानवत्त्वे सति बहुलबलाकावत्त्वे सति अचिरप्रभावत्त्वे सति उन्नतिमत्त्वात् वृष्टिमन्मेघवदिति । नद्याः पूर्णत्वं शेषवदुदाहरणम् । कथं पुनरेतन्नदीपूरो नद्यां वर्तमान उपरि वृष्टिमद्देशमनुमापयति ? व्यधिकरणत्वात् । नैवोपरि वृष्टिमद्देशानुमानं नदीपूरः । किं तर्हि ? नद्या एवोपरि वृष्टिमद्देशसम्बन्धित्वमनुमीयते नदीधर्मेण । उपरि वृष्टिमद्देशसम्बन्धिनी नदी स्रोतःशीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात् पूर्णवृष्टिमन्नदीवदिति । भविष्यति भूता चेति कालस्याविवक्षितत्वात् यः कश्चित् काल उपादेय इति । सामान्यतोदृष्टं नाम अकार्याकारणीभूतेन यत्राविनाभाविना विशेषणेन विशेष्यमाणो धर्मी गम्यते तत् सामान्यतोदृष्टं यथा बलाकया सलिलानुमानम्। कथं पुनर्बलाकया सलिलानुमानम् ? यावानस्य देशो बलाकयाऽजहद्वृत्तित्वेन प्रसिद्धो भवति तावन्तमन्तर्भाव्य वृक्षादिकमर्थं पक्षीकृत्य बलाकावत्त्वेन साधयति ।

अपरे तु मन्यन्ते सामान्यतोदृष्टं आदित्यस्य गत्यनुमानमिति । तन्न बुध्यामहे । कथमनुमीयते ? यदि तावद् गतिमानादित्य इति अस्य

गतिरनुमीयते ।तत्केन प्रतिपद्यते । न ह्यादित्यस्य गतेश्च कि
सम्बन्धि लिङ्गमस्ति । न चासम्बद्धोऽर्थोऽनुमातुं शक्यत इ
सर्वेणानुमीयेतेति। अथ देशान्तरप्राप्तिर्लिङ्गमिति ? तन्न। अद
न हि सवितुः कश्चिद्देशान्तरप्राप्तिं पश्यति । देशान्तरं
काशादि दिग्देशो वा । उभयं चाप्रत्यक्षम् । न चान्या
स्ति । तस्माद्देशान्तरप्राप्तिदर्शनमयुक्तम् । सर्वत्र खल्वयमा
स्य मण्डलमेव केवलमुपलभते । न च वस्तुमात्रदर्शनादनुमा
क्तम् । अपि च केनचित् प्रकारेण आदित्यस्य गतिः
द्रष्टुं उपलब्धिलक्षणप्राप्तत्वात् । न पुनर्देशान्तरप्राप्तिर
न्द्रियत्वात् । न हि कदाचित् प्रत्यक्षाप्रत्यक्षवृत्तिः संयोगो
प्रत्यक्षः । अथ देवदत्तस्य देशान्तरप्राप्तिदर्शनेनादित्यग
तुमानं सामान्यतोदृष्टमिति मन्यसे न केवलमादित्यस्य ग
गत्यनुमाने हि भवानपि गच्छतीत्येवं किमिति नानुमीयते।
मादित्यगत्यनुमानं साक्षात्। किं तर्हि ? देशान्तरप्राप्तिमनुमा
गत्यनुमानमित्यदोषः । देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे
क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदा
शसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वे
ण्यादावेतत्सर्वमस्ति स च देशान्तरप्राप्तिमान् एवं चादि
स्माद्देशान्तरप्राप्तिमानिति । अनया देशान्तरप्राप्त्या अ
गतिरनुमीयते इति । देशान्तरप्राप्तिमत्त्वे वाऽनुमानं देशा
प्तिमानादित्यः अचलचक्षुषो व्यवधानानुपपत्तौ दृष्टस्य
नाविषयत्वात् देवदत्तवदिति । एके तावद् दिक्प्रत्यक्ष
मानं ब्रुवते । प्रत्यक्षा दिक् अङ्गुल्या व्यपदेशाच्चन्द्रव
तच्च न । अरूपित्वात् । अरूपा दिक् कथं ग्राह्यक
भविष्यति।कथं तर्हि अङ्गुल्या व्यपदेशो ? दिग्देशसम्बन्धे

क्षादिषु दिग्व्यपदेशात् । ये दिग्देशसम्बन्धिनो वृक्षादयस्तान् दिगित्युपचरन्ति आदित्येन सहोपलब्धेः । प्राचीत्ययं शब्दः आदित्यसम्बन्धविशिष्टदिग्देशे वर्तते । तेनाद्येनादित्यदर्शनेन सह वृक्षादींनुपलभते तान् प्राचीत्युपचरन्ति उपचर्य चाङ्गुल्या व्यपदिशन्ति ।

अथवा त्रिविधमिति लिङ्गस्य प्रसिद्धसदसन्दिग्धतामाह । प्रसिद्धमिति पक्षे व्यापकं, सदिति सजातीये ऽस्ति, असन्दिग्धमिति सजातीयाविनाभावि । अथवा त्रिविधमिति नियमार्थं अनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति । कथमनेकधा भिन्नमिति ? अन्वयव्यतिरेकि द्विधा सजातीये सदेव सदसच्च । अन्वय्यपि द्विधैव । एवं व्यतिरेक्येकरूपम् सपक्षाभावात् । तदिदं पञ्चधा भिन्नमनुमानं कालभेदेन पञ्चदशधा भवति । तदपि पुनः पुरुषभेदानुविधानात् षष्टिभेदं भवति। तस्य त्वान्तर्गणिको ऽनन्तभेद इति । सोऽयमनुमानभेदः एवंभिन्नस्त्रिविधमित्यनेन सङ्गृहीत इसतो नियमार्थं त्रिविधग्रहणमिति ।

पूर्ववदित्युक्तं किं पुनरत्र पूर्ववत् । किं कार्यं उत कारणं, यदि पूर्वमस्यास्तीति पूर्ववत् कार्यं पूर्ववत् प्राप्नोति। ततश्च कारणेन कार्यानुमानमिति व्याघातः । पूर्वमस्यास्तीति पूर्ववदिति ब्रूमो न पुनः कार्यम् । किं तर्हि ? ज्ञानं, ज्ञानस्य पूर्वं विषयः । तदिदं पूर्ववदिति तेन कार्यानुमानमिति । एवं शेषवदादिष्वपि तद्विषयाणि ज्ञानानीत्युक्तं भवति । अथवा पूर्ववदिति प्रतिमसय एषः यथा पूर्वं प्रत्यक्षेण दृष्टोर्थः तथानुमानेनापि तमेवार्थं प्रतिपद्यत इति पूर्ववद्दृष्टो भवति ।

अन्ये पुनरन्यथा वर्णयन्ति । यथा तेनैव धूमेनाग्नि

प्रतिपद्यत इति । किं पुनरनेन धूमेन प्रतिपद्यते ? किमग्निं उत देशं उत सत्ताम् उताग्निमन्तं देशम् । न तावदग्निं प्रतिपद्यते । धर्मधर्मिभावानुपपत्तेः । ग्निर्धूमस्य धर्मः न वाग्निधर्मो धूमः प्रतीतत्वाच्चाग्नेर्नानुमे मस्ति । एतेन सत्ता देशश्च व्याख्यातः । अग्निसत्तायाः तत्त्वात् देशस्य चेति । अग्निमान् देश इति चेत् । न । धूमस्य र्मत्वात् । अथापीदं स्यात् अग्निमान् देशो धूमेनानुमीयते । नैवम् । कस्मात् ? अतद्धर्मत्वात् । न हि धूमोऽग्निमतो देशस्य । न चाग्ने(१)र्देशमात्रसम्बन्धो न प्रतीतः । अयमग्निमा चेत् । न । तस्यादृष्टत्वात् । देशविशेषोऽग्निमत्तयाऽनुमी देशमात्रं, न तस्यादृष्टत्वात् । न ह्ययं देशविशेषं पश्यति के शून्यमभिधानमुच्चारयति । अयं देशोऽग्निमानिति । न च धूम

श्रो मग्निप्रतिपादकं धूमभावे वायं पश्यति । अतो देशविशेषो ना अविनाभावेन प्रतिपादयतीति चेत् । अथापीदं स्यात् अ भावोऽग्निधूमयोरतो धूमदर्शनादग्निं प्रतिपद्यत इति । तद कल्पानुपपत्तेः । अग्निधूमयोरविनाभाव इति कोऽर्थः ? किं कारणभावः उतैकार्थसमवायः तत्सम्बन्धमात्रं वा । अस्तु पूर्वः कार्यकारणभाव इति । तन्न । अतद्वृत्तित्वात् । न हि धू वर्तते नाप्यग्निर्धूमे । स्वकारणवृत्तित्वात् । अतो न कार्य भावः । नैकार्थसमवायोपि । ताभ्यामन्यस्यानारम्भात् । भिन्नजातीयाभ्यां द्रव्यमारभ्यते । न च तावन्यत्र वर्तेते स्व वृत्तित्वादित्युक्तम् । सम्बन्धमात्रं तत्र वर्तत इति ? तदप्यनु शक्यत इति । कथम् ? यदि तावदयं कुरुते(२) अस्ति सम्बन्ध

(१) न वाग्ने—पा० १ पु० ।
(२) प्रयोगमिति शेषः ।

धूमयोरिति । तन्न । अप्रतीतत्वात् । अनग्निकस्यापि धूमस्य दर्शनाम्न सम्बन्धानुमानम् । रूपस्पर्शवत् साहचर्यं भविष्यति ? न । उभयोर्व्यभिचारित्वात् । अनग्निर्धूमो दृष्टोऽधूमश्चाग्निरिति उभयं व्यभिचारि तस्मान्न साहचर्यमिति । यत्र धूमस्तत्र वह्निरित्यनेनैव प्रत्युक्तम् । न चान्या गतिरिति । तस्मान्न धूमेन वह्निरनुमीयते । लोक विरोध इति चेत् यदि धूमेनाग्नेरनुमानं न भवेत् ननु लोको विरुध्यत इति चेत् । नास्ति विरोधो धूमविशेषेणाग्निविशेषणस्य धूमस्य प्रतिपाद्यत्वात् । कथं पुनरयमग्निर्धूमविशेषणं भवति ? यदा गुणभूतो भवति । अनुमेयोऽग्निमानयं धूम इति । धूमविशेषेणासाधारणेनानुमीयत इति । उभयं हि तदा प्रत्यक्षं धूमश्च तद्गताश्च सातत्यसंहत्यूर्ध्वगतिस्वभावादयो धर्मा इति । ते चैते धूमधर्मा धूमवृत्तयोऽप्रसिद्धं धूमधर्ममनुमापयन्ति । सर्वस्यानुमेयस्य वस्तुनो धर्मी प्रतिपादकश्च धर्मः प्रसिद्धो भवति । यथा शब्दस्यात्मसत्ता प्रसिद्धा कृतकत्वं च धर्मस्त्वनित्यत्वलक्षणोऽप्रसिद्ध इति । तद्विशेषणोऽयमनुमीयत इति ।

शेषवन्नाम परिशेष इति भाष्यम् । न, कर्म शब्दः शब्दान्तरहेतुत्वादित्युभयव्यावृत्तेरसाधारणं न हि शब्दान्तरहेतुत्वं कर्मणि नाकर्मणीति । न अभ्यर्थत्वात् । शब्दान्तरहेतुत्वमित्यस्य समानजातीयारम्भकत्वादित्यर्थः । तथा च न दोषः । सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोरिति भाष्यम् । लिङ्गलिङ्गिनोः सम्बन्धोऽप्रत्यक्ष इति किं ? यदाऽनुमीयते तदा अप्रत्यक्ष आहो न कदाचित्प्रत्यक्षो, यदि यदाऽनुमीयते तदाऽप्रत्यक्षः सर्वमनुमानमेवमिति विशेषणमनर्थकम् । अथ न कदाचित् प्रत्यक्षः ? कथं तर्ह्यनुमानमत्र प्रवर्तते । व्याहतं च भवति । नानुपलब्धे न निर्णीत इति । न । वि-

शेषणभूतस्याप्रत्यक्षस्य सर्वदानुमेयत्वात् । यदितरधर्म
धर्मिणोऽधिगतिसाधनं तत्सामान्यतोदृष्टं यथा इच्छादिभि
इच्छादयः खलु धर्मिणो भवन्ति । आत्मा च विशेषणं गु
इति । इच्छादीनां गुणत्वं प्रतीतो धर्मः । तेन धर्मेणात्मगुणवि
ष्टानेव इच्छादीननुमिमीते । परतन्त्रा इच्छादयो गुणत्वात्
वत् । पारतन्त्र्यप्रतिपत्तिरस्मादनुमानात् आत्मतन्त्रता तु
आत्मतन्त्रता परिशेषात् आत्मसंवेद्यत्वात् बाह्यकरणाप्रत्यक्ष
न पृथिव्यादिषु, पृथिव्यादिगुणाः आत्मपरात्मप्रत्यक्षाः बा
णप्रत्यक्षाश्च आत्माऽबाह्यकरणप्रत्यक्षाश्चेच्छादयः तस्मात्
व्यादिष्वाकाशान्तेषु, न दिक्कालमनःसु, तद्गुणानां तद्
यत्वात् । न च द्रव्यान्तरं शिष्यते । आत्मा शेषः । तस्य
त्तन्त्र इति ।

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानमिति
ध्यम् । किं तावद्धर्मिणमभिप्रेत्यायं भेद उत धर्मानिति
तावद्धर्मिणमभिप्रेत्य ? न कदाचिदसद्विषयमनुमानम् । न
लब्धसामान्ये अर्थे अनुमानं प्रवर्तत इत्युक्तं न चासतः सा
दर्शनमस्ति । अथ धर्ममभिप्रेत्य ब्रूषे ? धर्मा अपि त्रिविधा भ
विधीयमानाः प्रतिषिध्यमानाः स्वतन्त्राश्चेति । तत्र विधी
धर्मः पृथिव्यां गन्धवत्त्वं प्रतिषिध्यमानोऽपृथिव्यां गन्ध
स्वतन्त्रः समवायिनां समवाय इति । कथं पुनः स्वतन्त्रः ?
वायान्तराभावात् । यद्धि यत्र वर्तते तद्वृत्त्या वर्तते । न च स
यस्य वृत्तिरस्ति । अथ समवायान्तरं स्यात् समवायस्य, त
समवायान्तरकल्पनायामनवस्था स्यात् व्यवस्थायामाद्य एव
वस्था । किमिदं श्रद्दधानेन प्रतिपत्तव्यमनाश्रितः समवाय
आहोस्विन्न्यायो वाप्यस्ति । न सन्देहः, अस्त्येव न्यायः,

दार्थवृत्तिशब्दविषयत्वात् । परमाणुवदनाश्रितः समवाय इति न्यायः व्यापकत्वे सतीहबुद्धिनिमित्तत्वात् आत्मवत् । यदि पुनराश्रितः समवायः स्यात् ? ततः किं स्यात् कार्यमनाधारं स्यात् । कथमिति ? पूर्वं तावत्कार्यमात्मानं लभते पश्चात् कारणेषु समवायेन वर्तत इति । प्राग्वृत्तेरनाश्रितं प्राप्नोति । समवायश्च कार्यकारणयोर्वर्तत इति वृत्तिरस्य वाच्या । न हि वर्तमानं किञ्चिदवृत्तिमद्दृष्टम् । प्राप्तित्वात् संयोगवद्वर्तत इति चेत् । न । व्याघातात् । प्राप्तिः संयोगो वर्तत इति किमयं प्राप्तिधर्मः आहोस्वित् कार्यधर्म इति । वयं च ब्रूमः कार्यधर्मो न प्राप्तिधर्म इति । तथा कार्यान्तराण्यपि प्राप्तिमन्ति सन्तीति । यदि पुनरियं वृत्तिः प्राप्तिधर्मोऽभविष्यत् प्राप्तेरपि प्राप्त्यन्तरमभविष्यदित्यत्रनवस्थादोषः । प्राप्तेर्वृत्तिमत्त्वात् । न चैतामनवस्थां कश्चिच्छक्तः प्रतिपादयितुं प्रमाणाभावादिति । समवायश्च समवायान्तरेण वर्तते इति ब्रुवाणः शास्त्रं बाधते "तत्त्वं भावेन व्याख्यात"मिति । सम्बन्धिनिवृत्तौ सम्बन्धोऽवतिष्ठति इति न प्रमाणमस्ति । न नास्ति । ख्यातिनिमित्तानां निवृत्तेः ख्यातिनिमित्तान्यस्य निवर्तन्ते । न समवायः अकृतत्वात् । अकृतकः समवाय इति च कार्यस्याधारत्त्वेनानुमीयते । यद्ययं कृतकः स्यात् कार्येण सहोपादानादनाश्रितं कार्यं स्यात् । अथ कार्यात् पूर्वं भवतीति ? तथापि कस्येति वाच्यम् । अथ पश्चाद् भवतीति ? कार्यानाधारतादोषस्तदवस्थः । तस्मात् स्वतन्त्रः समवाय इति सिद्धम् । तत्र प्रतिषिध्यमानधर्मविषयमनुमानं असद्विषयं न पुनर्विधीयमानस्वतन्त्रविषयम् । भवतीत्यसद्विषयमिति चेत् भवति जायत इत्येकोर्थः । न । जायमानार्थानभ्युपगमात् भवति विद्यत इति । एवं तावद् व्यवस्थितमेतत् तत्पूर्वकमनुमानमिति ।

अपरे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोनुमानमि
अस्यार्थः । योर्थो यमर्थमन्तरेण न भवति स नान्तरी
नान्तरीयकश्चासावर्थश्चेति नान्तरीयकार्थः । तस्य दर्शनं त
नुमानं यस्तं वेद तन्नान्तरीयकोयमिति । अत्रार्थग्रहणमतिरि
न हि नान्तरीयकः स्यान्नार्थ इति । नान्तरीय
इति च समासपदमेतत् । तत्र यदि षष्ठीसमासो ना
यकस्यार्थ इति, नान्तरीयकं तावत् कृतकत्वं, तस्यार्थो धर्म
योजनं वा । यदि धर्मः कृतकत्वस्यार्थः । सत्त्वमेयत्वाभिधे
यनुमानं प्राप्तम् । अथ प्रयोजनमनित्यत्वप्रतिपत्तिर्हेतुः प्राप्तः
बहुव्रीहिः नान्तरीयकोर्थो यस्येति, तत्रापि कृतकत्वं नान्त
तद्यस्य स हेतुः प्राप्तः । तच्च कृतकत्वं घटादेः शब्दस्यानि
त्वस्य वा । यदि घटादेः, घटादिर्हेतुः प्राप्तोनित्यः शब्दो
दिति । अथ शब्दस्य, शब्दो हेतुः प्राप्तः अनित्यः शब्द
ब्दात् । अथानित्यत्वस्य साधनभावेन कृतकत्वं धर्मः ? तथा
नित्यः शब्दोऽनित्यत्वादिति प्राप्नोति अनित्यत्वस्यार्थः कृत
मिति । सर्वथा कृतकत्वमनित्यत्वे न हेतुः । अथ सामाना
रण्यं नान्तरीयकश्चासावर्थश्चेति, तथाऽप्यसमर्थः समासः वि
विशेष्यनियमासम्भवात् । उभयपदव्यभिचारे सति सामा
करणो भवति नीलोत्पलवत् । नीलशब्दस्याप्यनेकार्थवृत्ति
उत्पलशब्दस्यापि तथाभावात् सामानाधिकरण्यं भवति । न
रिह नान्तरीयक इत्युक्ते अस्ति व्यभिचारोऽर्थोऽनर्थ इति
ऽर्थग्रहणं समर्थं स्यादिति । एकपदव्यभिचारेऽपि दृष्टं सामा
धिकरण्यं । यथा पृथिवी द्रव्यं । अत्रापि उभयपदव्यभि
प्रधानाङ्गभावभेदेन द्रव्यशब्देन द्रव्यमुच्यते द्रव्यत्वं च । पृ
शब्देनापि प्रधानाङ्गविवक्षायां द्रव्यमुच्यते पृथिवी पृथि

त्विति उभयपदव्यभिचाराव् पृथिवी द्रव्यमिति युक्तमुक्तम् । इदं पुनर्न युक्तं नान्तरीयकार्थदर्शनमिति । कस्मात् ? अर्थप्रत्याय-नार्थत्वाच्च प्रयोगस्य—अर्थप्रत्यायनार्थं हि शब्दप्रयोगमिच्छन्ति । नान्तरीयकमित्युक्ते अर्थो गम्यते । अतो न युक्तो ऽर्थशब्द इति । तद्विद इति च न युक्तं नैवान्यथा नान्तरीयक इति । न हि नारिकेलद्वीपवासिनो धूमदर्शने नान्तरीयकमिति ज्ञानमस्ति । अतस्तद्विद इत्यपि न वक्तव्यम् । एतेन तादृगविनाभाविधर्मो-पदर्शनं हेतुरिति प्रत्युक्तम् । कोऽतिदेशार्थः ? यथा नान्तरीय-कार्थदर्शने ऽर्थग्रहणमयुक्तं तथा धर्मग्रहणमपीति । उदाहरणं तु यथा धूमोऽग्नेरिति । एतच्च न सम्भवतीत्यनेकधा वर्णितम् । अपरे तु मन्यन्ते—

"अनुमेये ऽथ तत्तुल्ये सद्भावो नास्तिताऽसती"

इत्यनुमानम् । एतेनानुमेयैकदेशवृत्तेरपि सङ्गृहीतत्वादलक्षणम् । यथाऽनित्याः परमाणवो गन्धवत्त्वाद् घटवत् । अनुमेये सद्भाव इत्यभिधानादप्रसङ्गः । नाप्रसङ्गः एकदेशवृत्तेस्तद्धर्मत्वात् विपक्षैक-देशवृत्तिवत् । यथा विपक्षैकदेशे वर्त्तमानो न विपक्षे नास्ति एवं पक्षैकदेशे वर्तमानो न पक्षे नास्तीत्येतद्व्युदासे यत्नः कर्तव्यः । न कर्त्तव्योऽवधारणान्निवृत्तेः । अनुमेये सद्भाव इत्यवधारणे द्वे । ...नुमेय एव सद्भावोऽथानुमेये सद्भाव एव । किं पुनरनेन पू-...धारणेन क्रियते किमसम्भवो निवर्त्यते अथ सम्भवो ..., उभयथापि नावधारणार्थो, विनापि तदधिगतेर्विनाप्य-...वायमर्थो गम्यते अनुमेये सद्भावोऽसद्भावो नेति । न चै-...वृत्तेर्निराकृत इत्यवधारणं व्यर्थं उत्तरपदबाधा च । अथो-...धारणमवगम्यते तस्य व्याप्तिरर्थः तथाप्यनुमेयमवधारितं ...स्या न धर्मो, यत एव करणं ततोऽन्यत्रावधारणमिति । स-

म्भवव्याप्त्या चानुमेयं नियतं, व्याप्त्यतिव्याप्तिभ्यां च
प्रसृतः । द्वौ राशी शिष्यमाणौ तत्तुल्यो विपरीतश्च । तत्र
ताऽसतीत्यनेन विपरीतान्निवर्त्यताम् तत्तुल्ये सद्भाव इति
मारभ्यते । न ह्यनेनाप्राप्तं किञ्चित् प्राप्यते । तत्तुल्ये च सम्
विवक्षितमिति । सम्भवमात्रं च व्याप्त्यतिव्याप्तिभ्यां
सम्भवेन लभ्यते । अथ तत्तुल्ये सद्भाव इत्येतदप्यव
र्थमारभ्यते, किं पुनरत्रावधार्यते ? किं तत्तुल्य एव
वः तत्तुल्ये सद्भाव एवेति । यदि तत्तुल्य एव सद्भा
सद्भावोऽवधारितः । तदा पूर्वोत्तरपदे बाधिते भवतः ।
भवति देवदत्तमेव भोजय यज्ञदत्तं च तथेहापि तत्तुल्य
द्भावः अनुमेये चेत्युन्मत्तवाक्यम् । अथ तत्तुल्ये सद्भा
तत्तुल्यैकदेशवृत्तेरहेतुत्वं यस्तज्जातीयस्यैकदेशवृत्तिः प्र
न्तरीयकत्वादिस्तेन स हेतुरिति प्राप्तं । असति नास्तित
सम्प्रधार्य प्रोक्तं यदसतस्स्वरूपमेव तन्नास्ति । न ह्यसदा
वति यतस्तत्प्रतिषेधः स्यात् । एतदप्यवधारणार्थमा
किमवधार्यते? नास्तितैवासत्येव वेति । यदि तावन्नास्ति
तीति व्यर्थं अनुक्तेपि तदधिगतेः । अनुक्तेप्येतद्गम्यते ऽ
स्तीति । अथ पुनरसत्येव नास्तिता ? गौर्विषाणित्वादि
हेतुः प्राप्नोति । एवं ह्यसत्येव नास्ति न पुनर्नास्त्येव ।
कद्विपदपर्युदासेन सप्तिकासम्भवे षट्प्रतिषेधमुक्त्वा
हेतुरभिधीयते एतदपि द्विपदयुक्तयोरन्वयिनोर्हेतुत्वात्
क्तस्य च व्यतिरेकिण एकस्य हेतुत्वादयुक्तमनभ्युप
पक्षस्य कृतकत्वप्रयत्नानान्तरीयकत्वे द्विपदयुक्ते एव
वाद्धेतूभवतः । व्यतिरेक्यपि तत्तुल्यासम्भवात् द्विपद
भवति । हेतुश्चेति । यथा नेदं निरात्मकं जीवच्छरीरं

त्वप्रसङ्गात् । अतोऽव्यापकत्वादलक्षणमेतदिति । एतेन सम्बन्धात्लक्षणं प्रत्युक्तम् । कदेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानमिति लक्षणं प्रत्युक्तम् । कथमिति ? न ह्येकस्मात् प्रत्यक्षादनुमानं भवति । अथापि सम्बन्धादेकस्मात् प्रत्यक्षादिति । एतदपि नैव, न ह्ययं तदा सम्बन्धं पश्यति यदाऽनुमिमीत इति । अथ पूर्वं दृष्टमिति ? तथाप्यनुपलब्धलिङ्गस्यानुमानं(१) प्रसज्येत । न चान्या गतिरस्ति । रूपेण च स्पर्शानुमाने स्वदृष्टिव्याकोपः । न ह्ययं रूपस्पर्शयोः सम्बन्धमुपलभते । अथैकार्थसमवायः सम्बन्ध इति ? सोऽपि स्वदर्शनव्याघातादयुक्त इति । न हि रूपस्पर्शावेकस्मिन्नर्थे वर्तेते । यत्र रूपं तत्र स्पर्श इति एतदपि नास्ति । न कचिद्रूपं स्पर्शो वा । परस्पराधाराधेयत्वेन स्यादिति चेत् । परस्पराधाराधेयभावेपि न रूपं स्पर्शे न स्पर्शो रूप इति । एतेन सप्तविधः सम्बन्ध इति प्रत्युक्तम् । न हि कार्यकारणभावादीनां सम्बन्धानां रूपस्पर्शयोरन्यतरः सम्बन्ध इति रूपेण स्पर्शानुमानं युक्तमित्यतोऽव्यापकत्वादलक्षणमिति निश्चितमनुमानम् ॥

अथोपमानम् । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानमिति ॥

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥**

सूत्रार्थः पूर्ववत्(२) । प्रसिद्धसाधर्म्यादिति–प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा साधर्म्यं यस्य, सोऽयं प्रसिद्धसाधर्म्यो गवयः तस्मात् साध्यसाधनमिति । समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थः(३) । किमुक्तं भवति ? आगमाहितसंस्कारस्मृत्यपेक्षं सारूप्य-

(१) तथाऽप्युपलब्धसम्बन्धस्य पूर्वमनुमानकाले चानुपलब्धलिङ्गस्यानुमानम् –इत्ययं पाठस्तात्पर्यटीकायाम् ।

(२) समानासमानजातीयव्यवच्छेद इत्यर्थः । (३) फलम् ।

ज्ञानमुपमानम् । यदा ह्यनेन श्रुतं भवति यथा गौरेवं गवय प्रसिद्धे गोगवयसाधर्म्ये पुनर्गवा साधर्म्यं पश्यतोऽस्य गवय इति समाख्यासम्बन्धप्रतिपत्तिः ।

प्रत्यक्षागमाभ्यां नोपमानं भिद्यते। कथमिति ? यदा गोगवयौ प्रत्यक्षेण पश्यति तदा ह्ययमनेन सरूप इति प्रतिपद्यते। यदा ऽपि शृणोति यथा गौरेवं गवय इति, तदा शृण्वत एव बुद्धिरुपजायते केचिद् गोधर्मा गवये ऽन्वयिन न्ते केचिद्व्यतिरेकिण इति। अन्यथा हि यथा तथैसेव न भूयस्तु सारूप्यं गवा गवयस्य इत्येवं प्रतिपद्यते । तस्मा प्रत्यक्षागमाभ्यां भिद्यत इति । गवा गवयसादृश्यं प्रतिपद्यते सत्तां वेति अहो ? प्रमाणाभिज्ञता भदन्तस्य । गवा गव य्यप्रतिपत्तेस्तु सञ्ज्ञासञ्ज्ञिसम्बन्धं प्रतिपद्यत इति सूत्रार्थ स्मादपरिज्ञाय सूत्रार्थं यत्किञ्चिदुच्यते ॥

अथ शब्दः । आप्तोपदेश इति ॥

आप्तोपदेशः शब्दः ॥ ७ ॥

न शब्दमात्रमिति सूत्रार्थः । आप्तः खलु साक्षात्कृ साक्षात्करणमर्थस्याप्तिः तया सह वर्तत इत्याप्तः । स्वर्गा वतादिषूपदेशो न प्राप्नोति अतीन्द्रियत्वात्—यदि साक्षा णमर्थस्याप्तिः स्वर्गापूर्वदेवतादीन् न कश्चित् पश्यतीति पादको व्यवहारो न स्यात्, तस्मादाप्तश्चासावुपदेशश्चेति नाप्तस्योपदेश इति । नैष दोषः । न ब्रूमोऽस्मदादीनां स्वर्गादय इति । अपि तु यस्य प्रत्यक्षाः तस्योपदेश इति । पुनरत्र न्यायः स्वर्गादयः कस्यचित् प्रत्यक्षा इति ? ब्रूमः मान्यविशेषवत्त्वात् आश्रितत्वात् कस्यचित्प्रत्यक्षा इति ।

(१) न्यायमिति शेषः ।

श्रितं तत्कस्यचित् प्रत्यक्षमिति । परार्थत्वात्—यत्परार्थं तदपि कस्यचित्प्रत्यक्षमिति । वस्तुत्वादागमविषयत्वात्—यद्वस्तु यच्च कथ्यते तत् कस्यचित्प्रत्यक्षं भवति यथा घटादि । अनित्यत्वात् कस्यचित्प्रत्यक्षा इति । असिद्धमपूर्वस्यानित्यत्वम् । न । प्रायणानुपपत्तेः । यदि धर्माधर्मौ नित्यौ भवतः कस्य प्रक्षयात्प्रायणमिति । यदि पुनरनित्यौ, विपच्यमानयोरुपभोगात् प्रक्षये सति विपच्यमानकर्माशयान्तराभावात् पूर्वशरीरात् प्रच्यवनं मनस, उत्तरशरीरे सम्प्राप्तिश्चेति जन्ममरणे इतः तस्मान्न नित्यावपि । नित्ये वाऽपूर्वे परिकल्पिते तस्य साधारणता असाधारणता वा वक्तव्या। यदि साधारणता ? सर्वप्राणिसाधारणोऽभ्युदयः स्यात् न वाऽन्यन्नियामकमस्ति क्रियालोपश्चेति । नित्यत्वे व्यञ्जकभेदान्नोभयदोषः—नित्यत्वे साधारणत्वे वा अदृष्टस्य न साधारणोऽभ्युदयो नापि क्रियाविलोप इति । कस्मात् ? व्यञ्जकभेदात्, नित्यमप्यपूर्वं योऽभिव्यनक्ति तस्य फलमभिव्यक्त्यर्था क्रियेति । अतो न क्रियालोप इति । येन यदभिव्यज्यते तस्यैव तत्फलदातृ भवतीति दृष्टम् । न दृष्टम् । न हि देवदत्तप्रकाशितं घटं यज्ञदत्तो न पश्यति । नित्यस्य वाऽपूर्वस्य काऽभिव्यक्तिः ? किमुपलब्धिः अथफलप्रदानसामर्थ्यं आहोस्विदावरणापगमः । यद्युपलब्धिः सा नास्ति । न हि कदाचिदप्ययमपूर्वं पश्यति अतीन्द्रियत्वात् । अथ फलप्रदानसामर्थ्यमभिव्यक्तिः ? फलप्रदानसामर्थ्यं किमपूर्वमथापूर्वधर्म इति । यद्यपूर्वं न हि किञ्चित्कृतं, अथापूर्वधर्मः तद्व्यतिरेकेणाप्यन्यदपूर्वमित्यत्र किं प्रमाणम् ?, वयं तु पश्यामः यतः फलं तदपूर्वमिति । अथावरणाद्यपगमोभिव्यक्तिः ? किमस्यावरणमिति वक्तव्यं न ह्यतीन्द्रियाणामर्थानामावरणसम्भवासम्भवौ चिन्त्येते । एतेन प्रतिपुरुषं नियतत्वं

प्रतिषिद्धं वेदितव्यम् । कथमिति ? तत्रापि क्रिया
पदोषः व्यञ्जकस्य चासामर्थ्यमिति । उत्कर्षार्थो
वृत्तिरयुक्ता नित्यस्याभेद्यत्वादिति । व्यञ्जकभेदानुवि
द् इति चेत् । न । एकस्मिन्नदृष्टत्वात् । अथापीदं स्यात्
व्यपूर्वं व्यञ्जकभेदानुविधानाद्भिन्नमिव भवति तद्भेदादुत्
कर्षौ भवत इति । एतदपि नास्ति । एकस्मिन्नदृष्टत्वात् ।
ह्येकं किञ्चिद्व्यञ्जकभेदानुविधायि दृष्टं यत एवं स्यादिति ।
च खड्गादिभेदान्मुखभेदः तदनुविधानाद् दृष्टो, न दृष्ट इति ।
किं पुनस्तद्यदि न दृष्टं, मिथ्या प्रत्ययः स इति ब्रूमः । कि
तन्न पुनर्भिन्नमेव, एकस्यानेकरूपस्यासम्भवात् । न ह्येक
रूपं सम्भवति । तस्मादपूर्वस्यैकत्वं वा ज्ञातव्यं उत्कर्षाप
तुत्वं वेति । प्रति पुरुषमनेकं नित्यं वेति—अथायं पक्ष आ
प्रतिपुरुषमनेकत्वं नित्यत्वं वाऽपूर्वस्य । अनिवृत्तो व्याघा
यणानुपपत्तिप्रसङ्गदोषः क्रियाविलोपश्च न व्यावर्तते ।
व्यक्तिस्तु फलं ददातीति किं यदाऽभिव्यक्तिस्तदा फलं द
उत क्रियानिवृत्त्युत्तरकालमिति । यदाभिव्यक्तिस्तदा फलं द
तन्न दृष्टम् । न ह्यश्वमेधक्रियानन्तरमेव स्वर्गप्राप्तिर्भवति ।
त्तरकालं असती क्रिया व्यञ्जिका तया चानुगृह्यमाणं द्र
चित्रं, न हि किञ्चिदपूर्वं नाभिव्यक्तमिति सर्वं सर्वदा फ
स्यादिति । अथापि स्वपक्षपरिरक्षयिषया क्रियानित्यत्वमपि
पद्येथा एवमप्यनिवृत्तो व्याघातः क्रियाविलोपादिक इति ।
यथायथा अपूर्वस्य नित्यत्वं प्रतिपद्यते तथोपपत्तिं न सहते ।

आप्तोपदेश इति किमाप्तानामविसंवादित्वं वा प्र
आहोस्विदर्थस्य तथाभाव इति । यद्याप्तानामविसंवादित्वं
पाद्यते ? तदनुमानात् । अथार्थस्य तथाभावः ? सोऽपि प्रत्य

यदा ह्ययमर्थं प्रत्यक्षेणोपलभते तदा तथाभावमर्थस्य प्रतिपद्यत इति । तन्न । सूत्रार्थापरिज्ञानात् । नायं सूत्रार्थः । आप्तोपदेशः शब्द इति । अपि त्विन्द्रियसम्बद्धासम्बद्धेष्वर्थेषु या शब्दोल्लेखेन प्रतिपत्तिः साऽऽगमार्थः । तस्मादसम्बद्धोऽयं विकल्पः ॥

**स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥**

स द्विविध इति नियमार्थम् । अनेकधा भिन्न आगमः प्रत्यक्षानुमानविषयतायामेव व्यवतिष्ठते इति । वक्तृभेदेन वा द्वैविध्यं दृष्टादृष्टार्थप्रवक्तृकत्वात् । प्रत्यक्षत उपलब्धार्थो दृष्टार्थः । अनुमानोपलब्धार्थोऽदृष्टार्थः । ऋष्यार्यम्लेच्छानामेतत्समानं लक्षणमिति । सर्वेषामागमेन व्यवहारदर्शनादनियमः । एवं चत्वार्येतानि प्रमाणानि यैर्देवमनुष्यतिरश्चां व्यवहारः कल्प्यत इति ॥

इति प्रमाणवार्त्तिकम्(१) ॥

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥**

किं पुनः***(२) प्रमेयविशेषविषयत्वात् नायं प्रमेयविशेषः प्रमेयमात्रस्य प्रमाणलक्षणोद्देशेन बोधितत्वात् प्रमेयविशेषावधारणा न सिद्ध्यति तत् प्रमेयम् यदनेन यथावत्परिज्ञायमानमपवर्गाय । अपरिज्ञायमानश्चासावात्मेति एतदर्थप्रकाशनायात्मादिसूत्रम् । अयमेव च सूत्रार्थ इति । अत्रापि (समान) (?) यथावचनं विग्रहः(३) । उभयावधारणमाप्तावन्यत-

(१) 'इति प्रमाणवार्त्तिक'मिति १ पुस्तके नास्ति ॥

(२) द्वितीयादर्शपुस्तके ऽत्र कश्चिदल्पांशो निपातितः प्रथमतृतीयादर्शपुस्तकयोरस्मिन् प्रकरणे खण्डितत्वात् तत्र कियन्त्यक्षराणीति निश्चयो न भवति ।

(३) इह प्रमेयं हेयोपादेयभावेनावस्थितं मुमुक्षुणा प्रतिपित्सितं,

रावधारणे दोषः । किं पुनरत्राऽवधार्यते—किमात्माद्येव अथ प्रमेयमेवात्मादीति । यद्यात्माद्येव प्रमेयं दिगादीनां(१) विशेषसमवायानां सूत्रे ऽनभिधानादव्यापकम् । अथ पुनः प्रमे त्मादि तथा च प्रमेया च तुलाप्रामाण्यवदिति(२) व्याघा सुवर्णादि द्रव्यपरिच्छेदसाधनत्वात् परिच्छेद्यत्वाच्च प्रमाण ब्दाभिलाप्यम् । लोकविरोधश्च एकस्यानेककारकवाच्यत्वा स्तिष्ठतीति । यथा तत्रैकं वृक्षाख्यं वस्त्वनेकेन कारकशब्दे तस्य तस्य निमित्तस्य सन्निपातात् । एवं प्रमेयं प्रमाणमिति सूत्रार्थापरिज्ञानात् । आत्माद्येव प्रमेयं यथावत् परिच्छि पवृक्तये भवतीत्ययं सूत्रार्थो, न प्रमेयान्तरनिराकरणार्थ रम्भः । प्रमेयमेवात्मादीति न दोषः । किमुक्तं भवतीति

तच्च परीक्षितस्वप्रमाणविशेषाधीनप्रतिपत्ति, लक्षणं च माणविशेषः । न चावान्तरप्रमाणसामान्यप्रत्यक्षादिलक्षण त्मादिप्रमाणावतारः कर्त्तुं शक्यः तस्य प्रत्यक्षादिसाम त्वादतः प्रत्यक्षादिलक्षणानन्तरं तदवतारः । अपरीक्षि तत् तत्त्वनिर्णयाय पर्याप्तमिति परीक्षा विधायिष्यते । तत् संशयादय इति युक्तं तेषां पश्चाल्लक्षणम् । तदिह प्रमेय तद्विभागोद्देशसूत्रमवतारयितुं भाष्यकारः पृच्छति स्म । नेन प्रमाणेनेति । जात्यभिप्रायमेकवचनं प्रकृते प्रमेये प्रमाणानामुपयोगात् । तदेतद्भाष्यमनूद्य वार्त्तिककार अ किं पुनरिति । प्रमेयनान्तरीयकत्वं प्रमाणानां सामर्थ्यम् त्ते । नेति । प्रत्यक्षादिलक्षणसामर्थ्यात् प्रमेयमात्रं सिद्धं प्रमेयमद्यापि न सिद्ध्यतीति तदर्थं प्रश्नः । स च विशेषो दर्शित इति । अयमेव च सूत्रार्थ इति । येषां तत्त्वज्ञान भ्यामपवर्गसंसारौ भवतस्त एव न न्यूनानाधिका इत्यर्थ तात्पर्यटीका ।

(१) दिगादीनामिति टीकासम्मतः पाठः ।

(२) सूत्रं तु "प्रमेयता च तुलाप्रामाण्यव"दित्थं पठि

णा प्रमेयमेवात्मादि बोद्धव्यमेव । नास्य प्रमेयत्वं विधीयते नान्यस्य च प्रमेयत्वं निराक्रियते । अपि तु मुमुक्षुणा बोद्धव्यमेवैतदित्यनूद्यते तस्मादुभयमवधार्यते । न च यथोक्तदोषः । उपेत्य ब्रूमो दिगाद्यप्यत्रैव लभ्यते उपपत्तिसामर्थ्यात् । का पुनरुपपत्तिः ? प्रवृत्तेर्विंशतिभेदात् तत्संस्कारकत्वेऽपि न दिगादयोऽपि लभ्यन्ते सामान्यविशेषसमवायाश्च विशेषणविशेष्यभावेन आत्माद्यो विशेष्यत्वेनोपादिष्टाः तेषां चेतरेतरव्यवच्छेदकभावेन सामान्यविशेषसमवाया विशेषणं कृतं (१)सूत्रे इति । न पुनरिदं प्रमेयावधारणार्थं सूत्रं न तु प्रमेयविशेषावधारणार्थं प्रमेयमात्रावधारणार्थं च प्रवृत्तौ विहितविधानादकुशलः सूत्रकारः स्यात् । आद्येन वा सूत्रेण प्रमेयं विहितमिति पुनर्विधानादुन्मत्तवाक्यमिदं स्यात् एवं चार्थमेवार्थकं सूत्रकारस्तुशब्दमाह । अन्यदपि प्रमेयमस्ति । यस्य तु तत्त्वज्ञानान्निःश्रेयसं तदिदं प्रमेयमिति तुशब्देन ज्ञापयति । सुखं पुनः कस्मादत्र नोक्तम् ? किमभावादन्यत उपलब्धेर्वा, न तावदभावात् प्रत्यात्मवेदनीयत्वात् प्रत्यात्ममेव वेदनीयं सुखमुपलभ्यमानं न शक्यं नास्तीति वक्तुम् । न चान्यत उपलब्धिरस्मादेव। अनभिधानं तु वैराग्यज्ञापनार्थम्। कथं? नायं मोक्ष्यमाणः सर्वं दुःखं भावयेदिति तस्य दुःखभावनार्थः सुखस्यानपदेशः । सर्वं दुःखं भावयतस्त्रैलोक्यस्यानभिरतिसञ्ज्ञा भवति। तां चोपासीनस्य त्रैलोक्यविषया तृष्णा विच्छिद्यते। तृष्णा नाम पुनर्भवप्रार्थना । साऽस्य सर्वं दुःखमिति भावयतो न भवति न हि कश्चिद्दुःखं प्रार्थयते । तृष्णाप्रहाणाद्यानि पुनर्भवसाधनानि तानि नोपादत्ते । तदनुपादानादनागतौ धर्माधर्मौ न भवतः । यावदुत्पन्नौ तावप्युपभोगात् क्षयं गच्छतः । सोऽयं धर्माधर्मलक्षणस्य

(१) भवन्तीति ते उक्ता भवन्तीत्यर्थाद्दिगादिग्रहणम् ।

संसारबीजस्य उच्छेदादपवृज्यते न पुनर्जायत इति आ
प्रदर्शनार्थं सुखानभिधानमिति ॥

आत्मनः समानासमानजातीयविशेषणार्थं सूत्रम् । इ

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो
लिङ्गमिति ॥ १० ॥

आगमस्यानुमानेन प्रतिसन्धानार्थं वा । आगमेन
आत्मा तस्यानुमानेन प्रतिसन्धानार्थम् । प्रमाणसंप्लवस्योदा
वा । यत्तदवोचाम प्रमाणानि संप्लवन्ते इति तस्यायं वि
यज्जातीयस्यार्थस्य सन्निकर्षादिति भाष्यम् । तत्रेच्छादी
तिसन्धानमात्मास्तित्वप्रतिपादकम् । तत्रेदं विचार्यते । 
च्छादि अनुपलभ्यमानमात्मानं गमयति ? स्मृत्या सहैकविषय
यस्मादेवेच्छादयः स्मृत्या सहैकविषया भवन्ति तस्मादेक
प्रतिपादयन्ति । न हि नानाकर्तृकाणां नानाविषयाणां
निमित्तानां(१) च प्रतिसन्धानमस्ति । न हि रूपरसगन्धस्पर्श
प्रतिसन्धीयन्ते । न हि भवति यद्रूपमद्राक्षं सोऽयं स्पर्श इति
पि भवति यत् स्पर्शमस्पार्क्षं तद्रूपं पश्यामीति । नापि देव
यज्ञदत्तप्रतिसन्धानं दृष्टम् । न हि भवति देवदत्तो य
यज्ञदत्तस्तमद्राक्षमिति । किं कारणम् ? बुद्धिभेदानां प्रति
षयत्वादिति । प्रतिनियतविषया इतरेतरव्यावृत्तिरूपा नैक
दिनो न भवन्तीति न युक्तं प्रतिसन्धानं तस्माद्यः प्रति
स आत्मेति ।

कार्यकारणभावात् प्रतिसन्धानमिति चेत
पि मन्येथा नैककर्तृकत्वात् प्रतिसन्धानं, किं तर्हि ? कार्य

(१) 'प्रत्ययाना'मित्यधिकं २ पुस्तके ॥

भावात् पूर्वपूर्वबुद्धिविशेषादुत्तरमुत्तरं बुद्ध्यन्तरं पूर्वबुद्धिशक्त्यनुविधानाद् सकलाहितशक्तिकलापमुत्पद्यते, अतो नानात्वेपि बुद्धीनां कार्यकारणभावाद् प्रतिसन्धानं बीजादिवदिति, तद्यथा शालिगुटिकाद्यनन्तरमङ्कुरः प्रादुर्भवति तस्य शालिशक्त्यनुविधानं तत्पूर्वकतया व्यवतिष्ठते, अनन्तरं महाभूतैरनुगृह्यमाणमुत्तरशालिबीजं जनयति न यवबीजं, अतत्पूर्वकत्वात्, तथेहाप्येकसान्तानिकीनां बुद्धीनां कार्यकारणव्यवस्थानाद् प्रतिसन्धानं अतत्पूर्वकत्वाद् न सन्तानान्तरबुद्धीनां, न पुनरेककर्तृकत्वात् प्रतिसन्धानमदर्शनात् तदिदं प्रतिसन्धानमन्यथाभवन्नात्मनः सत्तां प्रतिपादयितुं शक्नोति । न । नानात्वस्याबाधनात् कार्यकारणभावात् प्रतिसन्धानं ब्रुवन् न नानात्वं बाधते । किं कारणं? कार्यकारणभावः खलु नानात्वाधिष्ठानः उभयपक्षसम्प्रतिपन्ने च नानात्वे न प्रतिसन्धानं दृष्टं, कस्मात्? अन्येनानुभूतस्यान्येनास्मरणाद् । न चास्मृतं प्रतिसन्धातुं शक्नोति । अकार्यकारणभावेऽनुपपत्तेः । न ब्रूमः कार्यकारणभावे दृष्टं प्रतिसन्धानं अपि त्वकार्यकारणभावे न दृष्टमिति अतत्पूर्वकत्वादित्युक्तम् । तस्मादयथार्थोयमुपालम्भ इति । तदयुक्तम् । विवादकारणाव्यतिरेकादिति । एवं ब्रुवाणो भवान् न कारणमतिरेचयति । मयोक्तं नानात्वे न दृष्टमिति । त्वं न ब्रूषे ऽकार्यकारणभावान्नानात्वे न दृष्टमिति अनैकान्तिकत्वान्न विवादकारणमतिरिच्यते । तुल्यं भवतोऽपि नानात्वे ऽदर्शनादिति ब्रुवता न विवादकारणमतिरेचितं भवति । अभ्युपगमादनुत्तरं—तुल्यमिति ब्रुवताऽभ्युपगतं भवति । नासाधनाद्—न मया कार्यकारणभावात् प्रतिसन्धानं साध्यते अपि त्वन्यथैव तद्भवतीति हेतोरसिद्धार्थतादोषोऽभिधीयत इति । न । हेत्वर्थापरिज्ञानात् । न भवता हेतुरूपं विशेषतो व्यज्ञायि

केवलं हेतुसामान्यात् अन्यथैव भवतीति हेतुदोषोऽप्य
विशेषितं चैतत् प्रतिसन्धानं-स्मृत्या सह पूर्वापरमत्ययैकर्त्तृ
त्वेन प्रतिसन्धानं, सा च स्मृतिर्भवत्पक्षे ऽनुपपन्ना । कस्मात्
न्येनानुभूतस्यान्येनास्मरणात् । न ह्यन्येनानुभूतस्यान्येन स्म
ह्यन्येनानुभूतमन्यः स्मरति, अस्ति च स्मृतिः, तस्मात्
स्मिन् पक्षे स्मृतिः सम्भवति तत्र प्रतिसन्धानमिति ग
म् । भवानस्मात् स्मृत्यनुपपत्त्या भावयति न
पक्षे स्मृतिर्न सम्भवति । कथमिति ? कार्यकारणभावा
यत्कायचित्तसन्ताने स्मृतिरनुभवो वोत्पद्येते स कायचित्त
नः स्मर्ता चानुभविता च भवति । न । अस्थिरत्वाद्बुद्धे
स्थिरं हि वासकेन वास्यमानं दृष्टं न च बुद्धीनां स्थिरत
असम्बन्धाच्च-असम्बद्धं च वासकेन वास्यमानं(२) दृष्टं न च वा
केन सम्बन्धो बुद्धीनामस्ति । शक्तिविशिष्टचित्तोत्पादो वा
चेत्-अथाप्येवं कल्प्येत पूर्वचित्तसहजाच्चेतनाविशेषात् पू
विशिष्टं चित्तमुत्पद्यते सोऽस्य शक्तिविशिष्टचित्तोत्पादो
त्युच्यते । अत्रोक्तमस्थिरत्वाद्वासकेनासम्बन्धाच्चेति । यश्चा
तनाविशेषः पूर्वचित्तसहभावी स नापि वर्त्तमाने चेतसि
करोति नाप्यनागते । कथमिति ? वर्तमानं तावदविकार्यं
जायते तथाभूतमेव नश्यति, अनागते सोपि न सम्बध्यते
सम्बद्धं वासयतीत्युक्तम् । तस्मात् कार्यकारणभावात् स्मृ
शिक्षितो वासनमिति (१) । इतश्च न भवत्पक्षे स्मृतिः भावस
पेक्षत्वात् । सर्वो हि भावो भवितारमपेक्षते क्रियात्वादुत्पत्ति
स्मृतेश्च भविता कर्म वा भवेत् कर्ता वा, तण्डुलानां पाक

(१) यत्कायचित्तसन्ततिप्रभवोऽनुभवः स्मरत्यसावित्यर्थः ।
(२) वास्यमानं—पा० २ पु० ।

कर्मणि, देवदत्तस्य गतिरिति कर्तरि। तत्र न तावत्कर्मण्यसतोपि स-
म्भवात् । यदा विद्यमानं स्मरति तदाऽनाधारा स्मृतिः प्राप्नोति । अथ
कर्त्राधारा सा, तदाऽस्मत्पक्षे प्रयुक्ता न भवत्पक्षे । कस्मात् ? कर्तु-
रनभ्युपगमात् । न हि भवन्तः कर्तारं स्मृत्यर्थकं प्रतिपद्यन्त इति ।
अनाधारैव स्मृतिरिति यदाऽयं पक्षो भवति तदाऽनुमानं नास्ति
कार्यस्यानाधारस्यादर्शनादिति । कार्यं सर्वमाधारवत् दृष्टं रूपादि,
तच्च स्मृतिः तस्मादाधारवती । कार्यकारणयोर्भावभवितृव्यवहारः
कार्यक्षणो भावः कारणक्षणो भवितेति। एवं च किमन्येन भवित्रा
कल्पितेनेति। तच्च न। कालभेदात् कार्यकारणयोर्भिन्नकालत्वाद्रा-
श्रयाश्रितभावानुपपत्तेः कुण्डबदरादिवदिति । अथापीदं स्यात्
उत्पत्तिर्भावः उत्पत्ता भवितेति स्मृतिरप्युत्पद्यते यस्मात् तस्या
अप्युत्पत्तिर्भावो भविष्यति स्मृतिरप्युत्पन्नी भावितेति । तच्च न ।
विरोधादनभ्युपगमाच्च । यदि स्मृतिव्यतिरिक्तोत्पत्तिर्व्याहृतं भ-
वति, स्वरूपं च(१) वक्तव्यं, न हि भवन्त उत्पत्तिमव्यतिरेकेणोत्पत्तिं
मन्यन्ते । व्यतिरिक्तां चोत्पत्तिं मन्यमानेन भवता तस्याः स्वरूपं
वक्तव्यम्। स्वरूपं च निरूप्यमाणं तन्त्रं(२)बाधते। कथमिति ? उ-
त्पत्तिः स्वकारणसत्तासम्बन्धः सत्ता वा स्वकारणसम्बन्धविशिष्टा,
उभयं च तन्त्रेणाभ्युपगतमिति विरोधः । अथ स्मृत्यव्यतिरिक्तो-
त्पत्तिपूर्वकं? किं क्व वर्त्तत इति शून्यमभिधानम् । उत्पत्तिर्भाव उ-
त्पत्री स्मृतिरिति । यदा चोत्पत्तिः स्मृतेर्भावत्वेन विवक्षिता भवति
तदैवं वक्तुं न्यायम्। यदा तु स्मृतिर्भावस्तदा भवित्रा भवितव्यम्।
कस्मात्? भावस्य भवित्रपेक्षत्वादित्युक्तम् । तस्मात् कथञ्च न भ-
वत्पक्षे स्मृतिः सम्भवतीति स्मृतिमन्तरेण न प्रतिसन्धानमस्तीति ।
अस्ति चेदं प्रतिसन्धानं तस्माद्यत्कर्तृकमेतत्सोऽर्थोऽन्य एक

(१) चोहेत्वर्थे । (२) शास्त्रम् ।

आत्मेति ।

अथवाऽन्वयेनान्यः सूत्रार्थोऽभिधीयते इति । देवदत्तस्य रसस्पर्शप्रत्ययाः एकानेकनिमित्तकाः स्मृत्या सह मयेति प्रतिसन्धानाद् कृतसङ्केतानां वृद्धानामेकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवद् । यथा नानाकर्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यैकत्वात् प्रतिसन्धीयन्ते तथेहापि नानाप्रत्यया निमित्तस्य एकत्वात् प्रतिसन्धास्यन्ते यत्तन्निमित्तं स आत्मेति । अथवेच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यन्यथा वर्णयन्ति । गुणा इच्छादयः गुणाः परतन्त्रा भवन्तीति न्यायः पारिशेष्यात् । न सामान्यविशेषसमवाया अनित्यत्वात् । न कर्म वा व्यापकद्रव्यसमवायात् शब्दवदित्यादिसामान्यविशेषेतस्मिन्ननुमानं व्यवस्थितम् । एतेनानित्यत्वात् पारतन्त्र्यमिच्छादीनां कार्यत्वाच्च रूपादिवदित्युक्तम् । अयावद्द्रव्यभावित्वेन शरीरे गुणत्वप्रतिषेधः तत्प्रतिषेधाच्चात्मगुणत्वमिति पारिशेष्यात् सिद्ध आत्मेति ।

## चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

चेष्टेन्द्रियार्थाश्रयः शरीरमिति । का पुनरियं चेष्टा ? हितप्राप्तिपरीहारार्थः स्पन्दः । सुखसाधनोपलब्धौ तदीप्सा प्रयुक्तस्य यः परिस्पन्दः सा चेष्टेति गम्यते । एवं दुःखसाधनोपलब्धौ तज्जिहासानुष्ठानलक्षणः परिस्पन्द इति । कथमिन्द्रियाणां शरीरमाश्रयः ? स्वकारणवृत्तित्वादवृत्तित्वाच्च । यानि तावदिन्द्रियाणि तानि स्वकारणवृत्तीनि । यदकार्यं तदवृत्ति । घ्राणादीनि त्वक्पर्यन्तानि कार्याणि । श्रोत्रमनसी त्वकार्ये । न च घ्राणादि मनःपर्यन्तमिन्द्रियं शरीरवृत्ति तस्मादयुक्तमिन्द्रियाश्रय इति । शरीरानुविधानमिन्द्रियाश्रयत्वं ब्रूमः न पुनराधारा

धेनेन्द्रियाणि शरीरे वर्तन्त इति । अपि तु शरीरस्योपघातानुविधानमिन्द्रियाश्रयत्वस्यार्थः। शरीरानुग्रहेणानुगृह्यन्ते तदुपघाते चोपहन्यन्ते इत्ययमाश्रयार्थः तस्मादयथार्थ आक्षेप इति । एतेनार्थानामाश्रयार्थ उक्तो वेदितव्यः । किं कारणं ? न हि गन्धादयोऽर्थाः शरीरवृत्तयः । यत्तु तेषां कार्यं सुखदुःखोपलब्धिनिमित्तत्वं तन्नासति शरीरे भवतीति शरीराश्रया उच्यन्ते। यथा ग्रामीणा ग्रामण्यमाश्रिता इति । कथं पुनरेते चेष्टादयः सामान्यशब्दाः सन्तो विशेषवृत्तयो भवन्तीति ? सामान्यशब्दानामपि विशेषवृत्तित्वं, सामर्थ्यात् सामर्थ्यं प्रकरणादि, ब्राह्मणान् भोजयेति यथाऽशेषब्राह्मणभोजनस्याशक्यत्वात् विशेषण सन्निधीयमानं प्रकरणापन्नं ब्राह्मणविशेषमाह। एवं चेष्टादिशब्दानामपि सामर्थ्याद्विशेषे ऽवस्थानम् । सामर्थ्यं च लोकतस्तदधिगतिः प्रमाणासम्भवो वा । लोकतस्तावत् चेष्टाशब्दं न क्रियामात्रे प्रयुङ्क्ते किन्तु विशेष इति। यथा स्पन्दते सर्पति धावतीति । यथैते स्पन्दादिशब्दाः क्रियावाचकाः सन्तः क्रियाविशेषेष्ववतिष्ठन्ते तथा चायं चेष्टाशब्दः सामान्यवाच्यपि प्रमाणासम्भवात् क्रियाविशेषे वर्तते न क्रियामात्राधारस्य शरीरव्यक्तिहेतुत्वं सम्भवतीति । एवं च घटादिष्वप्रसङ्गः । यैरप्यत्राद्यादिपदप्रयोगे घटादिष्वप्रसङ्ग इति देश्यं क्रियते तदप्यनेन व्याख्यानेन प्रत्युक्तम् । सति तु प्रसङ्गे समस्तपदप्रयोगे ऽपि न परमाणुषु प्रसङ्गो वार्यत इति । यथा त्वस्माभिर्वर्णितं तथा न क्वचिदपि शरीरादन्यत्र वर्तत इति ।

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥१२॥**

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रम् । लक्षणसूत्राणि समानासमानजातीयविशेषणार्थानि सर्वाणीति सू-

त्वार्थो द्रष्टव्यः । उद्देशसामान्याल्लक्षणाभिधानं नामधेयेन प... भिधानमात्रमुद्देश इत्युद्देशलक्षणमुक्तं इदं च तथाभूतं तस्मा... णमिति । नेदं तथा, करणभावात् स्वविषयग्रहणलक्षणत्वे... याणां, करणस्वभावकानीन्द्रियाणीति तेषामतीन्द्रियाणां स्व... विषयग्रहणं तेन लक्ष्यन्त इति स्वविषयग्रहणलक्षणत्वं वेदि... असाधारणत्वादिति ।

भूतेभ्य इति पृथिव्यादिकारणोपदेशो नियमार्थः । ... पुनरयं नियमः ? भूतगुणविशेषग्रहणसाधनत्वं, न सर्वं ... सर्वभूतगुणविशेषं गृह्णातीति । अपि तु यज्जातीया... भवति तस्य यो गुणविशेष इतरेतरभूतव्यवच्छेदहेतुर्गु... स तेनैवेन्द्रियेण गृह्यत इत्ययं नियमः । ऐकात्म्ये पुनरयं नि... स्यात् । यदि पुनरिन्द्रियाण्येकात्मकानि एककारणकानि ... कारणस्वभावानुविधानादैकात्म्याद्विषयव्यवस्था न स्यात् ... सर्वार्थमेकं वा सर्वार्थमिति स्यात् । एककारणानामपि स्व... रूपादिवदिति चेत्—अथ मन्येथाः दृष्ट एककारणानां पा... पादीनां स्वभावभेदः । कतमत् पुनरेकं कारणं रूपादीनाम् ... संयोग इति । न । सिद्धान्तापरिज्ञानात्—न ब्रूमोऽग्निसंयोगादेव ... द्रूपादय इति, अपि तु पूर्वरूपादिविशेषापेक्षात्, यद्द्रव्यं ... ऽग्निसंयोगेन तस्य ये पूर्वरूपादयस्तेषां यः स्वगतो विशेषः[1] ... पेक्षमाणोऽग्निसंयोग उत्तरान् रूपादीन् विशिष्टानारभते । ... कृत्वा परमाणोः पक्वतरतमादिभेदः । तस्मान्नैककारणपूर्वका ... दय इति न किञ्चिदप्येककारणकं कार्यं दृष्टमिति । सर्वं हि ... प्रादुर्भवत् समवाय्यसमवायिनिमित्तकारणेभ्यो भवतीति । एक... संयोगविभागकारणं दृष्टमिति चेत् । न अनभ्युपगमात् । स्यान्...

(१) प्रध्वंस इत्यर्थः ।

च दृष्टं कर्म संयोगविभागकारणकमिति । न । अनभ्युपगमात्
नैतदभ्युपगच्छामो निरपेक्षं कर्म संयोगविभागयोः कारणमिति ।
यदि तर्हि कर्मापि सापेक्षं संयोगविभागौ करोति कर्मलक्षणहानिः
यन्निरपेक्षं संयोगविभागकारणं तत्कर्मेत्युक्तं तद्धीयेत लक्षणहानेश्च
न कर्म ततश्च संयोगविभागौ न कर्मपूर्वकाविति। नैष दोषः। नब्रूमो-
निरपेक्षं कर्म कारणमिति न किञ्चिदपेक्षत इति। अपि तु चरमभावि-
निमित्तान्तरं नापेक्षत इत्ययं निरपेक्षार्थः । यथा द्रव्यजातं समा-
नजातीयद्रव्यं संयोगं च चरमभाविनमपेक्षमाणं द्रव्यमारभते नैवं
कर्मजातीयं पश्चाद्भाविनिमित्तमपेक्षते। अपि तु कर्म सत्संयोगवि-
भागावारभते तस्मान्न कर्मलक्षणहानिः न चैकपूर्वकत्वं संयोगवि-
भागयोरिति ॥

पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥१३॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः॥१४॥

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतत्सूत्रम् ।
पृथिव्यादिगुणा इत्येतस्मिन् पदे ऽनेकः समासः सम्भवति । क-
थमिति ? पृथिव्यादीनां गुणा इति षष्ठीसमासः । पृथिव्यादीनि
च गुणाश्चेति द्वन्द्वः । पृथिव्यादयो गुणा येषामिति बहुव्रीहिः ।
एवमनेकसमासोपपत्तेः संशयः । किमत्र तत्त्वमिति ? द्वन्द्वः समास
इति तत्त्वम् । षष्ठीसमासस्तावन्न, पृथिव्यादीनामनिन्द्रियार्थत्व-
प्रसङ्गात् । यदि पृथिव्यादीनां गुणा इति षष्ठीसमासः स्यात्
पृथिव्यादीनां गन्धादिगुणविशेषणत्वेनोपयुक्तानामिन्द्रियार्थत्वं न
स्यात् विशेषणवैयर्थ्यं च स्यादिति । गन्धरसरूपस्पर्शशब्दा
इत्युक्ते पृथिव्यादिगुणा गम्यन्ते ततश्च पृथिव्यादिग्रहणं व्यर्थम् ।
न हि गन्धादीनां द्वैराश्यमस्ति पृथिव्यादिगुणत्वं चान्यगुणत्वं च

यतो(१) विशेषणमर्थवत् स्यात् तस्मान्न षष्ठीसमासः। गुणे सिद्धेर्न बहुव्रीहिः पृथिव्यादयो गुणा येषां, के ते गुणिनः पृथिव्यादयो गुणाः। न च पृथिव्यादीनां गुणत्वं शक्यं प्र यितुम्। न चान्यथा बहुव्रीहिः। प्रायेणायं समानाधिकरणे वति यथा चित्रगुरिति गोमत्तायां प्रसिद्धायां चित्रगुप सुप्रसिद्धे गवां चित्रगुरिति बहुव्रीहिः न पुनरिह गुणी प्र नापि पृथिव्यादीनां गुणत्वं प्रसिद्धम्। विशेषणत्वाद्गुण थिव्यादय इति स्यात्। तन्न। सर्वो गुण एव स्यादेवं ल्पनायां, न हि कस्यचित् कश्चित् विशेषणं विशेष्यो वा वतीति सर्वगुणत्वप्रसङ्गः तस्माद्बहुव्रीहिरपि न। उभयपद षेधादन्यसमासाभावाच्च द्वन्द्वः। यस्मात् षष्ठीतत्पुरुषबहु तिषिद्धौ समासान्तरं च न सम्भवतीति शिष्यमाणश्च स्मात् द्वन्द्वः समास इति। न द्वन्द्वः समासः शास्त्रयुक्त्यो यद्ययं द्वन्द्वो भवति शास्त्रं युक्तिर्वा पृथिव्यादीनामिन्द्रियार्थ क्तव्य इति। न। उभयस्याप्युपपत्तेरिति। उभयं पृथिव्या इन्द्रियार्थत्वे शास्त्रं युक्तिश्च सम्भवति। शास्त्रं तावत् द र्शनाभ्यामेकार्थग्रहणादिति। युक्तिरपि दर्शनस्पर्शनयोरे त्वेन प्रतिसन्धानं, यमहमद्राक्षं तं स्पृशामीति दृष्टिस्पर्श युक्तिः। शास्त्रमप्यस्मिन् पक्षे सम्भवतीति। ऐन्द्रियकत्वाभि सामान्यस्येति। तस्मात् सिद्धं पृथिव्यादीनि च गुणाश्चे समास इति। पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकर ण्यपदिश्यन्ते, गुणग्रहणेन च सर्व आश्रितो गुण इति सह रिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वस्नेहवेगकर्मसामान्यवि अनाश्रितश्च समवायस्तद्धर्मत्वाद्गुण इति। गन्धरसरूप

(१) चरतो—पा० २ पु०।

ब्दास्तर्हि पृथङ्न वक्तव्याः गुणग्रहणेन ग्रहणात् । पृथिव्यादिगुणास्तदर्था इति सूत्रे वक्तव्यम् । लघु चैवं भवतीति स एवार्थः सेत्स्यतीति । न कर्तव्यम्(१) । गन्धरसरूपस्पर्शशब्दानां पृथगभिधानमिन्द्रियविशेषनियमज्ञापनार्थम् । इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु नियतानि अन्यत्रानियतानि । तत्र पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि, शेषश्च गुणराशिः सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये समवायोऽभावश्च तथा ।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतदमृष्यमाणः पर आह—स्पर्शग्रहणमेव स्पर्शनेन, रूपग्रहणमेव चक्षुषेति । स पर्यनुयोज्यः—अथ रूपस्पर्शौ चक्षुःस्पर्शनाभ्यां गृह्येते इति कथमवगम्यते? यस्माच्चक्षुःस्पर्शनाभ्यां तद्विशिष्टः प्रत्ययो भवति ? अनास्पदस्तर्हि प्रतिषेधः घटादावपि तद्विशिष्टप्रत्ययदर्शनात् । घटादिकमप्यर्थं दर्शनस्पर्शनाभ्यामुपलभमानश्च तद्विशिष्टं घटादिकमर्थं प्रतिपद्यते । तस्मादसम्प्रधारितः प्रतिषेध इति । रूपादिभ्यस्तथा सन्निविष्टेभ्यो घटादिप्रत्यय इति चेत्—यदिदं भवताऽपदिश्यते दर्शनस्पर्शनाभ्यामयं घटं प्रतिपद्यत इति । मिथ्यैतत् । रूपादय एव तेन तेनाकारेण सन्निविशन्ते तानयमुपलभ्य तथाकारान् प्रतिपद्यमानो घट इति प्रपद्यते, न पुना रूपादिव्यतिरिक्ता घटादय इति । न । आकारार्थानभिधानात्—अतथाभूतस्य तथाभूतेन सामान्यमाकारशब्दस्याभिधेयम् । तद्यथा स्थाण्वाकारः पुमानित्यपुरुषस्य स्थाणोराकारः पुरुषेण यत् सामान्यं स आकारशब्दस्यार्थः स्थाणुपुरुषप्रसिद्धौ सत्यां भवतीति । न पुनर्भवतां घटाकारा रूपादय इति रूपादिषु घटाकारबीजं किञ्चिदस्ति । तस्मात् घटाकारा रूपादय इति यत्किञ्चिदेतदिति ।

(१) लघुसूत्रम् । गन्धादीनां पृथगभिधानं कर्तव्यमित्यर्थः ।

रूपादिमात्रे च घटादिबुद्ध्यभावः—यस्य रूपादिमात्रं घट
तस्य तेषां समानत्वात् यास्ता(१) बुद्धयो विविक्ता गौरश्वे
इति ता न प्राप्नुवन्ति, रूपादिगतस्य बुद्धिनियामकस्य विशे
हेतोरभावात्। संस्थानभेदाद्भेदप्रत्यय इति चेत्—केनचित् संस्था
विशेषेणावतिष्ठमाना रूपादयः संस्थानभेदानुविधानाद् घटादि
हेतवो भवन्तीति। नैतदस्ति संस्थानस्यान्यत्वेऽनन्यत्वे संज्ञाभेद
त्वात् व्यर्थाभिधानप्रसङ्गाच्च। यदि संस्थानं रूपादिभ्योऽन्यत्
तदिति संज्ञाभेदमात्रम्। अथानन्यत्तथापि रूपादीनां संस्थाना
नुविधानात् घटादिप्रत्यया इति व्यर्थमभिधानम्। घटादि
मिथ्याप्रत्यया इति चेत्—स न मन्यते घटादिप्रत्ययाः सम्यक्
इति, किन्तु शब्दवासनावशान्मिथ्याप्रत्यया भवन्तीति।
क्तम्। मिथ्याप्रत्ययानां सम्यक्प्रत्ययानुकारित्वात्-य
मिथ्याप्रत्यया लोके भवन्ति सर्वत्र ते सम्यक्प्रत्ययानु
रिणो भवन्ति न पुनर्घटादिप्रत्ययानां मिथ्याप्रत्ययत्वे
ल्पितानां बीजमस्ति। न चैते निर्बीजाः प्रादुर्भवन्ति तस्मा
थ्याप्रत्यया इति। मिथ्याप्रत्ययाश्चेत इत्यव्यतिरेके प्रमाण
त्तौ सत्यां सिध्यति, न चाव्यतिरेकप्रतिपादकं प्रमाण
न नास्ति, तदग्रहे तद्बुद्ध्यभावात् यद्यस्मादनर्थान्तरं भवति
तस्याग्रहो दृष्टः तद्यथा यूषस्य पङ्क्तेश्च, यच्च यतोऽर्थान्तरं भवति
तस्य ग्रहो दृष्टः तद्यथा रूपाद्यग्रहे बालग्रह(?) इति। नायं
नैकान्तिकत्वात् ये घटादिभावमापन्नाः पृथिव्यादयस्तेषां ग्
संगृह्यमाणायामर्थान्तरभूतानामबादीनामग्रहणम्। अथ चाबादि
अबादयो न दर्शनविषयभाजो भवन्ति तस्मादनेकान्तः।
चत्वारि महाभूतानि तथा सन्निविष्टानीति पक्षस्तथापि कथं

(१) यातामा—पा० २ पु०।

रि महाभूतानीति वचनं व्याहन्यते। अथ ब्रूषे नैव नो रूपादिव्यतिरिक्ताः पृथिव्यादय इति ? तथाप्यस्य वाक्यस्यायमर्थो भवति रूपादयो रूपमिति, ततश्च कामेऽष्टद्रव्यकोणुरिति व्याहन्येत। अथ पृथिव्यादीनां सङ्घातमात्रे रूपादिव्यवहारः ? तथापि न रूपं पृथिव्यादयो वस्तुनः सन्ति । कथमिति ? पृथिव्यादीनां सङ्घातो रूपं पृथिव्यादयश्च रूपादिसङ्घात इति संहन्यमानस्याभावान्न सङ्घातोऽस्ति, सर्वः सङ्घातः संहन्यमानतन्त्रो दृष्ट इति सर्वथा न व्याघातान्मुच्यते ।

तदग्रहे तद्बुद्ध्यभावादिति तच्छब्दार्थानुसृतावसम्बद्धार्थम् । यदा तच्छब्दस्यार्थोनुस्रियते तदा तदग्रहे तस्यैवाग्रह इति प्राप्तम् । तच्चासम्बद्धार्थं यदा पृथिव्यादि रूपादिविशेषणं साध्यते तदा तदग्रहे तद्बुद्ध्यभावादित्यस्य हेतोः पृथिव्यादिविशेषणानां रूपादीनां तच्छब्देनानभिसम्बन्धात् । एतेन पृथिव्यादिविशेषणा रूपादयः प्रत्युक्ताः । अत्रापि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति तच्छब्दस्य प्रधानसम्बन्धित्वात् । एवं रूपादिमात्रं पृथिवी पृथिवीमात्रं रूपादय इति पृथिव्येव रूपादयो रूपादय एव पृथिवीति पूर्ववत् प्रसङ्गः । सर्वत्र प्रतिज्ञापदयोर्व्याघातो वचनभेदात्—पृथिवीत्येकवचनं रूपादय इति बहुवचनं, वचनभेदानुविधानं च यत्र तत्रार्थभेदः । तद्यथा नक्षत्राणि शशीति। अस्ति चात्रापि वचनभेदः तस्मादत्राप्यर्थभेदेन भवितव्यम्। नन्वेकस्मिन्नर्थे वचनभेदो दृष्टस्तद्यथा चत्वार आश्रमाश्चातुराश्रम्यमिति । तन्नानभ्युपगमात्—नायं वचनभेदः क्वचिदेकत्वे दृष्टः चातुराश्रम्यमिति चतुर्णामाश्रमाणां समानं धर्मसाधनत्वमभिधीयते । एतेन षडेव गुणाः षाड्गुण्यं विशेष एव वैशेषिकमिति प्रत्युक्तम् । तदग्रहे तद्बुद्ध्यभावादिति चासिद्धो-

ऽप्ययं हेतुः। कथमसिद्धः? रूपाद्यग्रहे द्रव्यग्रहाद्–यस्माद्भिन्ना नभेदानुविधायिनः स्फटिकमणे रूपानुपलब्धौ स्फटिक प्रत्ययो दृष्टः। योऽप्ययं दृष्टान्तो यूषवद्व पङ्क्तिवच्चेति तत्र यूषो व्यङ्ग्योऽपि न पङ्क्तिः। यूषो हि नाम उत्पन्नपाकजानां द्रव्याणां कालविशेषानुग्रहे सति द्रव्यान्तरसंपृक्तानां पाकजे यः संयोगः स यूष इति, स चार्थान्तरवदित्यसिद्धो दृष्टान्तः। तेन पानककाञ्जिकविरेकावक्षारादयः प्रत्युक्ताः। पङ्क्तिरप्येकदेशसम्बन्धिषु परस्परप्रत्यासत्त्यनुगृहीतेषु अवधारितानवधारितेषु भिन्नभिन्नजातीयेष्वाधारेषु वर्तमाना बहुत्वसङ्ख्यैवोच्यते। एवं नियतदिग्देशसम्बन्धिषु गजतुरगस्यन्दनेषु परस्परप्रत्यासत्त्यनुगृहीतेषु अवधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसङ्ख्यैव सेनेत्युच्यते। जातिविशिष्टपुरुषोपग्रहेण वर्तमाना परिषद्, प्रव्रजितविशेषोप वर्तमाना सङ्घः। एवं यथासम्भवं पूगवनयूथब्राह्मणगण अपि द्रष्टव्याः। एवमनियतदिग्देशसम्बन्धिष्वनाद्यन्तेषु न्येषु वर्तमाना कुण्डलकं बहुत्वसंख्यैवेति। तस्माद् पङ्क्तिरपि रमिससिद्धो दृष्टान्तः। अथार्थान्तरे किं प्रमाणमिति? उपल समस्तैरुपलभ्यैर्व्यपदेशः–यदिदं चन्दनमुपलभ्यते तस्य श्वे तिक्तो रसः पटुर्गन्धः शीतः स्पर्श इति। यश्चायं प्रत्यक्षस्य क्षेण व्यपदेशः सोऽर्थान्तरे दृष्टो यथा ब्राह्मणस्य कमण्डलुः न खल्वयमेवं प्रतिपद्यते–यदिदं श्वेतं रूपं तदनुमीयमानरसग र्शानामिति। सेनावनादिभिरनेकान्त इति चेद्–अथापि स्यात् दृष्टोऽनर्थान्तरेऽपि व्यपदेशः सेनाया हस्ती, काननस्य वृक्ष न असिद्धत्वाद्–असिद्धमेतद् अनर्थान्तरत्वं सेनायाः कानन यथा च तदर्थान्तरं सेना काननं वा तदुक्तमिति। तदसत्त्वमि अथाप्येवं कल्प्येत–सङ्ख्यैव तावन्नास्ति कुतोऽर्थान्तरभाव

नैवम् । सङ्ख्या नास्तीति ब्रुवता एकानेकप्रत्ययानां विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम् । कस्मात् ? एकानेकप्रत्ययाना-मप्रत्याख्येयत्वात्—विशिष्टाश्च प्रत्यया भवन्तो न निमित्तप्रत्याख्या-नेन भवितुमर्हन्ति । किं कारणम् ? कुम्भप्रत्ययनिमित्तान्यनिमित्तक-एकानेकप्रत्ययः कुम्भप्रत्ययविलक्षणत्वात् नीलादिप्रत्ययवत् तस्मा-द्यत्तत्प्रत्ययनिमित्तं सा सङ्ख्येति । तत्प्रत्ययविषयनिमित्तप्रत्य-यव्यतिरेकेण ततोऽन्यस्य तद्विशिष्टप्रत्ययस्योत्पत्तौ निमित्तान्तराका-ङ्क्षित्वं दृष्टम् । तद्यथा वस्त्रचर्मकम्बलेषु वस्त्रचर्मकम्बलप्रत्ययास्तेभ्य एव भवन्ति । तेषु तु योऽन्यो नीलमिति प्रत्ययः स निमित्तान्तरा-द्भवन् दृष्टः तथा च घटादिष्वपि घटादिविषयनिमित्तव्यतिरेकभाजः तत्र एकादिप्रत्ययाः तस्मात्तैरपि निमित्तान्तराद्भवितव्यम् । य-न्निमित्तं ते सङ्ख्यादय इति । महत्पुष्पितशब्दाभ्यां सामानाधिक-रण्यान्न सङ्ख्या सेना वनं वा भवितुमर्हति—यदि सङ्ख्या सेना वनं वा, महती सेना पुष्पितं वनमिति न प्राप्नोति, न सङ्ख्यायां महत्त्वम-स्ति न पुष्पयोग इति । नैष दोषः । महती सेनेति किमुच्यते तानेव गजादीन् सङ्ख्याधारानवधारितानवधारितेयत्तान् स्थान्यङ्गान्तरो-पचये(१)सति महती सेनेति व्यपदिशन्ति । तत्रेयं स्थानिषु गजादिषु म-हच्छब्दवाच्येष्वपचयोपचयोपकरणात् बहुत्वसङ्ख्या महतीत्युच्यते । पुष्पितमित्यत्रापि पुष्पसम्बन्धिषु वृक्षेषु पुष्पसम्बन्धेनैकार्थसमवा-यमनुभवन्ती बहुत्वसङ्ख्यैवाभिधीयते । यथा मधुरो रसः । तिक्तो गुडश्चेति । अत एव व्यपदेशात् सङ्ख्यादीनामप्यर्थान्तरभावः । असति दर्शनान्न हेतुः यथा गर्तश्छिद्रमिति । न, अपरिज्ञानात्—गर्तो हि नाम रूपादिमद्भिः सावयवैरारब्धकार्यैर्मध्यशून्यैः संस्थानविशे-

(१) संख्याधारानवधारितावधारितेयत्तान् स्थादिन्यङ्गान्तरो-पचते—पा० २ पु० स चायुक्तः ॥

षोपहितमाकाशमिति। एतेन छिद्रं व्याख्यातम्। एकस्मिन्नर्थे नात् व्यपदेशादर्थान्तरभावो न युक्तः—तद्यथा खदिरस्था णुरिति। बहुषु चाऽसंयुक्तेषु दर्शनात् तद्यथा प्रासादानां प संयुक्तेषु चाऽसजातीयेषु दर्शनात् त्रिवृत्पृथिव्युदकतेजां विरेक(?) इति। यत्तावदेकस्मिन्नपि दर्शनादिति। तदयुक्तम्। ख रशब्दस्य जातिविशिष्टद्रव्यवाचित्वात्—खदिरशब्देन जाति द्रव्यमुच्यते स्थाणुशब्देनापि संस्थानविशेषोऽभिधीयते सं विशेषश्च प्रचयाख्यः संयोगः स चार्थान्तरमिति। ए कुण्डलकं, प्रतिमायाः शरीरं, सुवर्णस्याङ्गुरीयकं, शिलापु शरीर,मित्यादिकं भेदवाचकमित्युक्तं भवति। प्रासादानां पङ्क्तिवद्द्रष्टव्या। संयोगो विरेक इत्युक्तमेतत्। गुणसमुदाय केणाग्रहणादिति चेत्—अथापि मन्येथाः यदि रूपादिव्य द्रव्यं स्यात् तद्रूपादीनन्तरेण पृथगुपलभ्येत न तूपलभ्यते न्नास्ति। अग्रहणस्य द्विनिमित्तत्वादनेकान्तः किमिदमग्रहणं स्याभावादाहो ग्रहे हेत्वभावादिति सन्दिह्यते। ग्राह्याभा चेत् प्रतिज्ञार्थेन हेत्वर्थस्याक्षेपादयुक्तो हेतुः। ग्रहणाभावादि न व्यतिरेकप्रतिषेधः। यश्च तदग्रहे तद्बुद्ध्यभावादिति हे सोऽस्यापि द्रष्टव्य इति। सोयमनन्यत्ववादो यथा यथा वि तथा तथा स्पष्टमन्यत्वं प्रतिपादयति प्रमाणानामेकत्रोपपत्ते चानुपपत्तेरिति। तस्माद्व्यवस्थितमेतत् पृथिव्यादीनि गु द्वन्द्वः समासः॥

अथ बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रम्।

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्॥ १५॥**

बुद्धिरुपलब्धिरित्यादि। एतैः पर्यायशब्दैर्योऽभिधीयते

(१) त्रिवृतान्युदकतेजांसि विवेक इति २ पु॰ पा॰।

सा बुद्धिरिति । पर्यायशब्दाः कथं लक्षणम् ? व्यवच्छेदहेतुत्वात् सर्वं हि लक्षणमितरपदार्थव्यवच्छेदकमेतैश्च पर्यायशब्दैर्नान्यः पदार्थोऽभिधीयत इत्यसाधारणत्वाल्लक्षणम् । उपपत्तिसामर्थ्यात् पर्यायशब्दाभिधानाद्बुद्धिवृत्तेर्निराकरणम् । 'य आहुः बुद्धेर्ज्ञानं वृत्तिरात्मन उपलब्धिर्वृत्तिरिति' तन्निराकरणार्थं समानार्था एते शब्दा इति बुद्धिवृत्तिः पृथङ्निराकृता भवति । का पुनरत्रोपपत्तिर्भवति ? आत्मोपलभते बुद्धिर्जानीत इति ब्रुवाण उभयोश्चैतन्यं प्रतिपद्यते उभयचैतन्ये च प्रत्ययव्यवस्थानुमानं न स्यात् । यदि बुद्धिश्चेतना आत्मा चेतनो न बुद्ध्यवसितानर्थानात्मोपलभेत । किं कारणम् ? चेतनान्तरोपलब्धानां चेतनान्तरस्याप्रतिपत्तेः । अस्ति च प्रतिपत्तिः तस्मादेकश्चेतन इति । बुद्धिवृत्त्यविशिष्टायांच ज्ञातृवृत्तौ कल्पितायामात्मनः स्वरूपं वक्तव्यम् । बुद्धिरध्यवस्यत्यात्मा चेतयत इति चेत्-अथापीदं स्यात् यथा बुद्धिरर्थानध्यवस्यति तथाऽऽत्माऽधिदेशमधिकालं चोपलभत इति । अध्यवस्यत्युपलभत इति पर्यायशब्दौ । न च पर्यायशब्दैः पदार्थनानात्वं युक्तम् यथा ध्वनिनिर्नाद इति । अन्यथा हि ध्वनिर्निर्नाद इत्यत्रापि नानात्वं स्यात् । अथात्मा चेतयते बुद्धिर्ज्ञापयतीति चेत् ? अद्धा बुद्ध्या जानीते पुरुषो न बुद्धिः, बुद्धिर्ज्ञापयतीति, बुद्धिर्ज्ञानसाधनं भवतीति ।

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहा इति भाष्यम् । एते स्मृत्यादयो मनसो लिङ्गं भवन्ति । किमेत एव ? न । किं तर्हि ? इयं च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ।

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

यस्मादिन्द्रियार्थसन्निकर्षे सत्यपि युगपज्ज्ञानानि न सम्भवन्ति । अतो गम्यते अस्ति तदिन्द्रियसंयोगसहकारि निमित्तान्तर-

मप्यापि, यस्य सन्निधानासन्निधानानुविधानात् ज्ञानस्योत्प-
त्पत्ती भवत इति । कुतः ? कारणवैकल्ये कार्यप्रतिबन्धादि-
त्यर्थः । कथं पुनः स्मृत्यादयो मनसो लिङ्गं भवन्त्यन्यत्र
ना इति ? न ब्रूमः स्मृत्यादयो मनोवृत्तित्वान्मनसो लिङ्गं
अपि तु गन्धादिक्रियान्यत्वे सति क्रियात्वात् करणान्तर-
कत्वम्—या गन्धादिभ्योऽन्या क्रिया सा करणान्तरप्रयोज्या
यथा रथादिक्रिया । क्रिया चेयं स्मृत्यादिका तस्मादियं
रणान्तरं प्रयोजयति । सुखादयो वा गन्धादिभ्योन्यत्वे सति
त्वाच्चक्षुरादिव्यतिरिक्तकरणान्तरप्रयोजका रथादिवदिति ।
रथादयो विषयाः चक्षुरादिव्यतिरिक्तं करणं वास्यां
प्रयोजयन्ति विषयाश्च सुखादयः तस्मात्तैरपि करणान्तरं
यितव्यमिति । अथायुगपज्ज्ञानोत्पत्तिर्ज्ञानधर्मः सा कथं म-
भवति ? अथासम्बद्धमपि लिङ्गमिष्यते ? सर्वं सर्वस्य लिङ्गं
अस्त्यात्मा काकस्य कार्ष्ण्यादित्येतदपि स्यात्, न त्वेवं भ-
तस्मान्नासम्बद्धं लिङ्गं सम्भवति । असम्बद्धमपि
भवतीत्येके—यथा प्रत्यग्रशरावदर्शनं कुलालवृत्ति(२) कु-
सद्भावं गमयति भ्रान्तिमच्चक्रमदर्शनं चेति । तन्न ।
कुलालसद्भावो बोद्धव्यः किन्तु देश एवाविदूरकुलाल-
साध्यः तस्य प्रत्यग्रशरावत्वं धर्मः भ्रान्तिमच्चक्रवत्त्वेनापि
ऽविदूरकुलालवत्त्वेन साध्यते तस्मान्नासम्बद्धमनुमानं
दिति । युगपज्ज्ञानानुत्पत्तिस्तर्हि कथं मनसाऽसम्बद्धा मनो
भवति । युगपज्ज्ञानोत्पत्तेरेव पक्षीकरणान्नासम्बद्धम् । कथं
रूपादिग्रहणानि चक्षुरादिव्यतिरेकेणाधिष्ठायकान्तराणि

* प्रयोजिका इति–पु०पा० । (१) वास्या स्यादिति पु० ।
(२) कुलालजत्वेन साध्यवृत्ति इति—पुस्तकान्तरे पा० ।

पुरुषस्यायुगपदुत्पत्तेः । तद्यथा अनेकशिल्पपर्यवदातस्य पुरुषस्यानेकं वास्यादि युगपत् सन्निधानेनोपस्थितं हस्ताद्यधिष्ठायकापेक्षं न युगपदनेकरथादिक्रियां निर्वर्तयति तथा चक्षुरादि न युगपदनेकं ज्ञानं करोति तस्मात्तदप्यधिष्ठायकान्तरमपेक्षत इति । इन्द्रियाणि वा पक्षीकृत्य वक्तव्यम् । कथमिति ? चक्षुरादीन्द्रियं आत्मप्रवृत्तावधिष्ठायकान्तरापेक्षं अयुगपत्प्रवृत्तेः वास्यादिवदिति । यदि तर्हि चक्षुरादीन्द्रियं मनःसन्निधानापेक्षमर्थानामयुगपद्ग्राहि य एकेन्द्रियग्राह्यास्तेषु कथमयुगपद्ग्रहणं ? न हि तत्रासन्निहितं मन इति । सम्बन्धिभेदादिति चेत् युगपत्सम्बन्धिषु कथम् । भवतु तावन्नीलादिभेदेषु एकेन्द्रियविषयेषु इन्द्रियविषयसम्बन्धिभेदादयुगपद्ग्रहणं, अथ ये युगपत्सम्बध्यन्ते तेषु कथं शुक्लो गौर्गच्छतीति प्रत्यया न युगपत्प्राप्नुवन्ति ? बुभुत्साभेदादयुगपद्ग्रहणमित्येके— एके तावद् ब्रुवते सम्बद्धोऽप्यर्थोऽबुभुत्सितत्वान्न गृह्यत इति । तन्न । मनोनिवृत्तिप्रसङ्गात्—एवं तर्हि मनः परित्याज्यम् यदि बुभुत्साभेदादयुगपद्ग्रहणानि भवन्ति । अन्यत्रापि बुभुत्साभेदो न दण्डवारित इति मन इदानीमनर्थकं परित्याज्यम् । सत्यां च बुभुत्सायामयुगपद्ग्रहणे न्यायोन्योत्रधारणीयः तस्मादन्यनिमित्तमयुगपद्ग्रहणमिति । किं पुनर्निमित्तं ? करणत्वं—यथैवायं करणधर्मो नानाधिष्ठितं करणं प्रवर्तत इति तथा सम्बद्धस्याप्यऽनेकक्रियाकारित्वं नास्ति, न हि किञ्चित् करणं सम्बद्धमपि सदेकदाऽनेकां क्रियां शक्नोति कर्तुम् । यदि पुनरात्मैवाधिष्ठाता भवेत् तथाप्यात्मनो युगपदनेकेन्द्रियसम्बद्धस्यानिषेधादयुगपज्ज्ञानोत्पत्तौ न्यायोऽन्योवधार्यः । स च नान्तरेण मन इति सिद्धं मनः ।

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति । शरीरेण मनसा वा
सेयं प्रवृत्तिः प्रत्येकं दशविधा पुण्या पापा च। पुण्या का
त्राणं परिचरणं दानमिति । वाचा सत्यं हितं प्रियं स्वा
इति । मनसा दया स्पृहा श्रद्धा चेति । विपर्ययेण पा
विधैव । क्षणिकत्वात् प्रवृत्तेर्जन्मकारणत्वानुपपत्तिः सेयं
क्षणिका सती जन्मकारणमिति न युक्तम्, ततश्च
व्याघातः । न । प्रवृत्तिफले प्रवृत्त्युपचारात् । प्रवृत्तिफ
धर्मौ अस्मिन् सूत्रे प्रवृत्तिरित्युच्यते । कस्मात् ? तत्सा
अन्नं वै प्राणिनःप्राणा इति यथा ।

प्रवर्तनालक्षणा दोषाः ॥ १८ ॥

प्रवर्तनालक्षणा दोषाः । का पुनरियं प्रवर्तना ? य
प्रवर्तते तं प्रवर्तमानं रागादयः( १ ) प्रवर्तयन्तीति ।
त्तिहेतुत्वात् प्रवर्तनेत्युच्यते यथा कारणा हारणेति । सा
प्रवर्तना कथं गम्यते ? प्रत्यात्मं प्रत्यक्षा, परशरीरे त्वानु
त्मवदिति । यथाऽऽत्माऽहङ्कारविषयत्वेनावतिष्ठमानः प्रत्या
भवति । न हीयमहङ्कारबुद्धिरानुमानिकी । नागमिकी ।
नुमानिकी ? लिङ्गाभावात् । कथं नौपदेशिकी ? अनुपदि
पत्तेः । तस्माद्रूपादिवत् प्रत्यात्ममात्मा प्रत्यक्ष इति ।
वृत्त्यनुमेयस्तु परशरीर इति ॥

पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

पुनरुत्पत्तिः प्रेत्यभावः । पूर्वोपात्तशरीरादिपरित्या
शरीरोपसंक्रान्तिः स प्रेत्यभाव इति । पुनर्ग्रहणं संसार
ज्ञापनार्थम् । पुनः पुनर्जन्ममरणे भवत इत्यनादित्वं संसार

( १ ) वादयः– पा० २ पु० । स च प्रामादिकः ।

यति । कः पुनरयं संसारः ? दुःखादीनां मिथ्याज्ञानपर्यन्तानाम-विच्छेदेन यः कार्यकारणभावः स संसार इति। स चानादिः पूर्वापरकालनियमाभावात् । यदि पूर्वं दुःखं, तज्जन्मना विना न युक्तम् । अथ पूर्वं जन्म, तदा धर्माधर्मावन्तरेण न युक्तम् । अथ पूर्वं धर्माधर्मौ, तावपि विना रागद्वेषाभ्यां न युक्तौ । अथ पूर्वं रागद्वेषौ, न मिथ्याज्ञानादृते तयोः प्रादुर्भाव इति । मिथ्याज्ञानं तर्ह्यादिः ? तदपि शरीरादीनन्तरेण न युक्तम् । सोऽयं दुःखादीनां मिथ्याज्ञानपर्यन्तानां कार्यकारणभावोऽविच्छिन्नः संसार इति आजरञ्जरीभाव इति चोच्यते । सोऽयं संसारः किमात्मन आहो मनस इति ? यदि क्रियामधिकृत्योच्यते तदा मनसस्तद्धि संसरति । अथोपभोगमधिकृत्योच्यते तदात्मनः, स हि सुखदुःखे उपभुङ्क्त इति ॥

प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

प्रवृत्तिदोषजनितोऽर्थः फलम् । शरीरादि जन्यं सर्वं फलं, धर्माधर्मप्रवर्तकत्वात्। मुख्यकल्पनायां सुखदुःखोपभोग एव, तदवसानात् । यस्माद्धर्माधर्मयोः सुखदुःखोपभोग आवसानिकं फलं, तस्य तु नान्तरेण शरीरादीन् सम्भव इति कृत्वा शरीरादीन् धर्माधर्मावारभ्य सुखदुःखोपभोगं कुरुत इति । सोऽयं फलशब्दः सुखदुःखोपभोगे मुख्यः शरीरे गौण इति ।

बाधनालक्षणं दुःखमिति ॥ २१ ॥

बाधनालक्षणं दुःखम् । एतदेव शरीरादि बाधनानुषङ्गाद् दुःखमित्युच्यते। स्वभावतस्तु दुःखमेव दुःखं, लक्षणशब्दोऽनुषङ्गार्थः सर्वमिदं शरीरादि दुःखानुषक्तमिति । अत्र शरीरं दुःखस्य निमित्तं निमित्तार्थोऽनुषङ्गः । इन्द्रियाणि विषया बुद्धय इति सा-

धनं साधनार्थोऽनुषङ्गः । सुखं दुःखाविनाभावि, अत्रार्थे भावोऽनुषङ्गः स्वरूपतस्तु दुःखं दुःखमिति । सर्वं स्वरूपतो मिति केचित् । न । प्रत्यक्षविरोधात् । न हि प्रत्यक्षं सुखं प्रत्याख्यातुम् । दुःखविकल्प इति चेत्—अथापीदं स्यात् विकल्प एव सुखमिति, न पुनः स्वरूपतोऽस्तीति । न । नञ्प्रयोगासंभवात् । नहि विकल्पे नञ् प्रवर्तमानो दृष्टः ब्राह्मणविशेषे भवत्यब्राह्मण इति । एवं दुःखविशेषे ऽदुःखं स्यात् । यदि च सुखं न स्याद्धर्मवैयर्थ्यम् । किं कारणम् साधनं धर्म इति । सुखं च नास्तीति व्यर्थो धर्मः । दुःखं फलमस्येति न युक्तम् । धर्मस्याभावफलत्वप्रसङ्गात् अ धर्म इति । प्रवृत्तिद्वैतं च लोके दृष्टं तन्न स्यात् । हितमा ऽयेकः प्रवर्तते अनिष्टं हास्यामीत्यपरः प्रवर्तते । हितस्या प्रवृत्तिद्वैतं च न स्यात् । दुःखभावनोपदेशो न स्यात् प्रा म्भभावात् । सक्त्यभावश्च, न हि कश्चिद्दुःखे सज्यत इति मुख्यतः सर्वं दुःखं दुःखभावनोपदेशेन च दुःखमित्युच्यते

## तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तदत्यन्तविमोक्षोऽपवर्ग इति । तेन शरीरादिना दुः ऽऽत्यन्तिको वियोग इति ।

आत्यन्तिकी सुखाभिव्यक्तिरित्येके—एकेत्वात्यन्ति खाभिव्यक्तिं मुक्तिं ब्रुवते । तन्न । प्रमाणासम्भ मुक्तस्यात्मनो नित्यं सुखमिति न प्रमाणमस्ति । नियामकत्वादिति चेत् अनेककारणनिष्पन्नसुखस्यात्मनि नियामकमन्तरेण न युक्तः तस्मादात्मनि नित्यं सुखमस्ति सुखं नियम्यमानमात्मानमाश्रयत इति चेत् । न । सर्वोत्प

ज्ञाव सुखवदात्मनि दुःखमपि नित्यं कल्पयितव्यं इच्छादयश्चेति । अनैकान्तिकता वा । अभिव्यक्त्यर्थानभिधानाच्च । नित्यं सुखमभिव्यज्यत इति कोऽभिव्यक्त्यर्थः ? ज्ञानमिति चेत् नित्यमनित्यं वेति कल्पनानुपपत्तिः । अनित्यमिति चेत् कारणं वक्तव्यम् । आत्ममनःसंयोगो वा कारणं(१) तस्यापेक्षाकारणं वक्तव्यम् । यदि मन्यसे आत्ममनःसंयोगो ज्ञानस्य कारणं तस्य तर्ह्यपेक्षाकारणं वक्तव्यम् । न हि द्रव्यगुणकर्मस्वारभ्येषु संयोगो निरपेक्षं कारणमिति । आत्ममनःसंयोगः सुखापेक्षः कारणमिति चेत् । न । कैवल्यविरोधात् । अथ मन्यसे आत्ममनःसंयोगो नित्यमात्मनि व्यवस्थितं सुखमपेक्षमाणो ज्ञानकारणं भवतीति । तन्न युक्तं कैवल्यविरोधात् । यथाऽयमात्ममनःसंयोगो विषयमात्रमपेक्षमाणो निमित्तान्तरनिरपेक्षः सुखज्ञानं करोति, एवं रूपादीनपि विषयाननपेक्षमाणः तद्विषयाणि ज्ञानानि कुर्यात् । ततश्च कैवल्यं निवर्तते—सर्वानर्थानयमात्मा लभत इति । नित्योपलब्धिप्रसङ्गाच्चेति । योगजधर्मानुगृहीतो नित्ये सुखे ज्ञानं करिष्यतीति चेत् न युक्तम् । तत्क्षये तदभावात्—यदा योगजो धर्मः क्षीणो भवति तदास्य किमनुग्राहकमिति वाच्यम् । योगजधर्मो न क्षीयते इति चेत् न युक्तम् । उत्पत्तिधर्मकस्य सर्वस्यानित्यत्वात् सर्वमुत्पत्तिधर्मकमनित्यं दृष्टमिति । नित्योऽसौ योगसमाधिजो धर्म इति चेत् योगजसमाधिजश्च नित्यश्चेति व्याहतम् । नित्यं ज्ञानमिति चेत् । न । सुखवत् प्रमाणाभावात् मुक्तसंसारस्थयोर(२)विशेषप्रसङ्गाच्च । सुखदुःखसंवेदनपर्यायश्च न स्यात् नित्यमयं सुखमुपलभेत ततश्च मोक्षार्थः प्रयासो व्यर्थः स्यात् । न चायं सुखं जिहासति विवेकहानस्याशक्यत्वात् दुःखं जिहासमानः सुखमपि

(१) संयोगः कावारणं–पा० २ पुस्तके स च प्रामादिकः ॥
(२) 'मुक्तसंसारिणोर्वा' 'मुक्तसंसारवतोः'–पा० २ पु० ।

जिहासति । न चायं कदाचिद्दुःखमुपलभत इति कस्य प्रवर्तते । शरीरादिप्रबन्धादप्रसङ्ग इति चेत् नित्यं-सुख इति नास्ति प्रसङ्गः—यस्माच्छरीरादयो नित्यसुखस्योपल तिबन्धका भवन्तीति । न । शरीरादीनामुपभोगार्थत्वात् नि रादिप्रसङ्गाच्च । यथा मुक्तस्य नित्यं सुखं कल्प्यते एवं दयोपि नित्याः कल्पयितव्याः एवमस्य कैवल्यं साधीयो शरीरादीनां नित्यत्वं दृष्टविरुद्धमशक्यं कल्पयितुमिति चे सुखस्यापि तर्ह्यस्मदादेर्दृष्टविरुद्धं नित्यत्वमशक्यं कल्पयि प्रमाणाभावादित्युक्तम् तच्च नास्ति । कस्मात्?इष्टार्थाधिगमा इहायं लोकः प्रवर्तमान इष्टाधिगमार्थं प्रवर्त्तते, प्रवर्त्तन्ते च माणास्तेषामपीष्टाधिगमार्थया प्रवृत्त्या भवितव्यम्, सेयं त्तिर्नित्यसुखे ऽर्थवती नान्यथेति । न । प्रवृत्तिद्वैतदर्शना प्रवृत्ती लोके दृष्टे इष्टाधिगमार्थाऽनिष्टहानार्था च । तत्रेदं पा किमिष्टाधिगमार्थमाहोऽनिष्टहानार्थमिति सन्दिह्यते । आग चेत्—आगमादेतद्गम्यते मुक्तस्यात्मनो नित्यं सुखमिति मुक्त भवतीति श्रूयते । आगमोऽप्येवं विचारणीयः किमयं सुखेन योगमाह उत दुःखेनात्यन्तिकवियोगमाहेति । दुःख भावेपि सुखशब्दप्रयोगो बहुधा लोक इति । एवं च ज्वा योगे लौकिका व्याचक्षाणा(१) भवन्ति सुखिनः सं इति । यदि पुनरयं सञ्चक्षाणको मोक्षे नित्यं सुखमिति रागेण प्रवर्तते न मुच्येत । कस्मात् ? रागस्य बन्धनसमा बन्धनसमाज्ञातो राग इति । यद्यपि द्वेषात् प्रवर्तते दुःख स्यामीति तथापि न मुच्येत द्वेषस्य बन्धनसमाज्ञानादिति द्वेषौ हि बन्धनमिति । न । अप्रतिकूलत्वात् । अप्रतिकू

(१) व्याचक्षमाणाः—पा० २ पु० प्रमादिकः ।

हानं भवति न पुनरयं दुःखं द्वेष्टि अद्विषंश्चायं प्रवर्तमानोऽप्र-
तिकूलं दुःखहानमधिगच्छतीति ।

चित्तं विमुच्यत इत्यन्ये रागादीनां तत्र सामर्थ्यात् ।
यस्माद्रागादिवशं चित्तमालम्बनान्तरं गत्यन्तरेषूत्पद्यते न
पुनरात्मनि रागादीनां सामर्थ्यमस्ति । न । अयत्नतः त-
त्सिद्धेः । ये चित्तस्यानुत्पादनं निरोधं वाऽपवर्गमिच्छन्ति तेषा-
मयत्नतः सिद्धो मोक्षः । किं कारणं ? जन्मनो विनाशार्थत्वात्
जातं विनष्टमित्ययत्नासिद्धमेतादिति।सन्ततेरनुत्पादोऽपवर्ग इति चेत् ।
न।तस्याशक्यत्वात् । सन्ततेऽरनुत्पादो न शक्यते कर्तुम्। कार्यका-
रणभावप्रवाहस्य सन्ततिभावात् । अनागतानुत्पादः क्रियत इति
चेत् अनागतानुत्पादस्य विद्यमानत्वात् किं क्रियत इति सर्वथा
न चित्तस्यापवर्गः सिद्ध्यतीति । कस्य तर्ह्यपवर्गः ? योऽपवृज्यते ।
कोऽपवृज्यते ? आत्मा । अथ काऽपवृक्तिः ? दुःखादिभिर्वि-
योग इति ॥

प्रमेयानन्तरं प्राप्तिः संशयस्य स्थानवतो लक्षणवचनमिति
या प्रमेयानन्तरं क्रमप्राप्तिः साऽभिधीयते ॥

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्य-
व्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥**

समानानेकधर्मोपपत्तेरिति सूत्रम् । तत्र समानधर्मोपपत्ते-
रनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च(१) त्रिविध एव संशय इत-
रपदविशेषणाद् भवतीति सूत्रार्थः । तत्र विषयस्वरूपानवधा-
रणात्मकः प्रत्ययः संशयः समानधर्मादिभ्य उत्पन्नो विषयस्य
विशेषं नावधारयति यः स संशय इत्युच्यते । प्रत्ययो ऽनवधार-
णात्मकश्चेति व्याहतं ? प्रत्ययस्यैतत् प्रत्ययत्वं यद्विषयावधारणा-

(१) संशय इत्यधिकं पुस्तकान्तरे ।

त्मकत्वं, न चेदयं विषयस्वरूपमवधारयति प्रत्याययत्वं तर्हि व्याह-
ति। न। स्वरूपप्रत्यायनात् स्वरूपमस्य प्रतीयते, न पुनरयं
स्वरूपमवधारयति अतश्च संशयः प्रतीयत इति प्रत्यय इति ।

समानशब्दः साधारणार्थः समानस्य धर्मस्योपपत्तेः सा-
धारणस्येति यावत् । किं पुनरत्र साधारणं किं गुणः
सामान्यमिति ? यदि गुणः स न साधारणः । कस्मात्? ए-
वृत्तित्वात् परिमाणस्य, एकद्रव्यवृत्ति परिमाणं तत् कथं सा-
धारणं भविष्यतीति । सामान्यमपि न युक्तम् द्रव्याश्रि-
न ह्यूर्ध्वत्वं द्रव्ये वर्त्तते, किन्तु गुणे परिमाणे । न ह्यूर्ध्वत्वं गु-
वर्त्तमानं सामान्यं द्रव्ये संशयं कर्तुमुत्सहते । कस्मात् ? गुण-
धारितत्वात् यद्वृत्ति सामान्यं सोऽर्थोऽवधारित इति । न । सा-
णार्थस्यान्यथा व्याख्यानात् । न ब्रूमो गुणः साधारण-
नापि सामान्यमपि तु सादृश्यार्थः यावहमर्थौ पूर्वमद्राक्षं
धर्मः ऊर्ध्वत्वलक्षणो वर्तते तेन धर्मेण सदृशोऽयं धर्म
इति । तस्योपपत्तिरध्यवसायः । यदुक्तं भवति सदृशस्य
पलब्धेस्तदुक्तं भवति समानस्य धर्मस्योपपत्तेरिति । कस्मात्
नोच्यते समानधर्मोपलब्धेरिति ? अनुक्तमपि यस्मात् गम्
गम्यमानस्याभिधानं व्यर्थम् । केन पुनरेतद् गम्यते?(२) वि-
शेषापेक्ष इति वचनेन । कथं? विशेषस्यापेक्षा आकाङ्क्षा
पलभ्यमानविशेषे युक्ता । यदि चायं विशेषं न पश्यति
षानुपलब्धेर्गम्यत एव सामान्यं पश्यतीति । अथ पुनरयं सा-
न्यं न विशेषं पश्येत्तदा विशेषापेक्ष इति व्यर्थं वचनं स्यात्
सामर्थ्येन गम्यते सामान्यमुपलभत इति । अथ बोध
पर्याय एवोपपत्तिशब्द इति । उपपत्तिः प्रमाणगम्यता

(१) मन्यते—पा० २ पु० । (२) मन्यते—पा० २ पु०

पलब्धिः । यः पुनरनुपलभ्यमानसद्भावो धर्मः सोऽविद्यमानव-
द्भवतीति । का पुनर्विद्यमानस्याविद्यमानेन समानता ? प्रमाणा-
नालम्बनत्वम् । अविद्यमानमपि प्रमाणस्यालम्बनं स्वतन्त्रं न भ-
वति तदप्यनुपलब्धिलक्षणं प्राप्तमिति । विषयशब्देन वा विषयिणं
प्रत्याह—समानधर्मोपपत्तिशब्देन वा विषयी प्रत्ययो विधीयते ।
लौकिकं वा न्यायमनेन वाक्येनावरुणद्धीति यथा लोके वक्तारो
भवन्ति धूमेनाग्निरनुमीयत इति । न च वाक्ये दर्शनशब्दः श्रू-
यते । अर्थप्रत्यायकत्वात् वाक्ये दर्शनशब्दमनुजानाति धूमं दृष्ट्वा-
ऽग्निरनुमीयते इति ।

अव्यवच्छेदहेतोरिति वक्तव्यम्—यदिदं समानधर्मो-
पपत्तेरिति पदमेतस्मिन्नव्यवच्छेदहेतोः समानस्य धर्मस्योपपत्तेरिति
वक्तव्यम् । न हि केवला समानधर्मोपपत्तिः संशयकारणमन्यथा
कृतकत्वादिनाऽपि संशयः स्यात् समानं हि कृतकत्वं सर्वानित्या-
नामिति, व्यवच्छेदहेतुत्वान्न भवति । न । समानार्थापरिज्ञानात् ।
व्यवच्छेदहेतुश्च भवति समानश्च धर्म इति न युज्यते, व्य-
वच्छेदहेतुर्नाम विवक्षिततज्जातीयवृत्तित्वे सति यो विजातीयावृत्तिः
स व्यवच्छेदहेतुः तस्य च समानार्थता नास्ति । समानो हि धर्मो
यो विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिः । तस्मा-
दव्यवच्छेदहेतोरिति न वक्तव्यम् ।

सोऽयं साधारणो धर्म उपलभ्यमानः संशयहेतुः । किं के-
वल इति ? न केवलः । किं तर्हि ? उपलब्ध्यनुपलब्ध्यव्यवस्था-
तश्च । यदि चोपलब्ध्यनुपलब्धी न व्यवस्थिते भवत इति ।
किमेतावन्मात्रं साधनमिति ? नेत्युच्यते । यदि विशेषाकाङ्क्षा भव-
ति समानधर्ममुपलभते । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इदन्तया
वाऽनिदन्तया वा । विशेषाकाङ्क्षायां च सत्यामर्थसन्देहो भवतीति ।

किमिदं समस्तं कारणमसमस्तं वा ? समस्तमिति । यदि समानधर्मोपपत्तेरिति केवलमुच्येत उपलब्धिविशेष- सामान्यत उपलब्धिरस्तीति तस्याऽपि संशयः स्यात् । यदि पुनरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशय इत्येतावत् अनुपलब्धसामान्यस्यापि क्वचिदुपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयः स्यात् इति । विशेषापेक्ष इत्येतावति चो- ऽनुपलब्धसामान्यस्यापि क्वचिद्विशेषस्मृतिरस्तीति संशयः स्यात् । एवं समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति पदद्वये नौयानमेक्षमाणादिगतस्य न भवति संशयः । एवमुपलब्ध्यनुपलब्धि- व्यवस्थातो विशेषापेक्ष इति पदद्वये ऽभिधीयमाने ऽत्यन्तानुपल- ब्धेऽर्थे संशयः स्यात् । समानधर्मोपपत्तेर्विशेषापेक्ष इति चो- सामान्यधर्मदर्शने सत्यपि विशेषाकाङ्क्षायां च सत्यामुपल- ब्ध्यनुपलब्ध्योर्व्यवस्थानान्न भवति संशयः । एवं यदाऽयं द्रष्टा दृष्टपूर्वं सामान्यविशेषवन्तमर्थमुपलभते चोपलब्ध्यनुपलब्धी व्यवस्थिते भवतः । सोऽयं द्रष्टा स्थानात् यदाऽपैति, ततोऽस्यापगमाद्विषयविप्रकर्षाभिभवि- षया विशेषा नाभासन्ते, महाविषयं सामान्यमवभासते, उप- नुपलब्धी पुनर्व्यवतिष्ठेते, विशेषार्थस्मृतिश्च नास्ति, न च । तस्मादेकद्विपदपर्युदासेन समस्तं लक्षणमुच्यत इति । सामान्यधर्मो- पपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्ष इति चैकपदपर्यु- दासः कृतः । समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च समा- नधर्मोपपत्तेर्विशेषापेक्ष इति च उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशे- षापेक्ष इति च द्विपदपर्युदासः कृतः समस्तपदपरिग्रहेण । समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो वि- मर्षः संशय इत्याह । तेन ज्ञापयति समस्तमेतल्लक्षणमिति ।

मर्श इति नानार्थात्रमर्षणं विमर्षः । उभावर्थौ मृशतीव(१) संशी-
तिः संशय इति भावसाधनम् । करणसाधनं वा संशेते ऽनेनात्मा
सुप्त इव भवति । क उपमार्थः ? अर्थानवधारणमुपमानार्थः । ए-
तेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम् । कोऽतिदेशार्थः
यथाऽऽद्यपक्षे त्रिपदपरिग्रहेण एकद्विपदपर्युदासः कृतः तथा-
नन्तरयोरपि द्रष्टव्यमिति ।

अनेकधर्मोपपत्तेः संशय इति—अनेकस्यानेकश्च धर्म
इति केचित्—अनेकस्य धर्मोऽनेकधर्मः अनेकस्य द्रव्यगुण-
कर्मलक्षणस्य संयोगजत्वं धर्मः अनेकश्च धर्मः संयोगजत्वनि-
र्गुणत्वनिष्क्रियत्वक्षणिकत्वानि शब्दे, तदेवमनेकधर्मोपपत्तेः
संशय इति केचित् । तदयुक्तम् । समानधर्मोपपत्तेरित्यत्र चरितार्थ-
त्वात् । समानधर्मोपपत्तेरित्यनेनैव यश्चैकोऽनेकवृत्तिः यश्चानेक-
एकवृत्तिः स लभ्यत इति चरितार्थत्वात् न पुनरनेकधर्माभि-
धानेन प्रयोजनमस्तीति । अथानेकधर्मशब्दस्य कोऽर्थः ? असा-
धारणो धर्मः । कथं पुनरसाधारणो धर्मोऽनेकधर्म इत्यनेन समा-
सपदेनाभिधीयते ? समानासमानजातीयविशेषकत्वात् समान-
जातीयमसमानजातीयं चानेकं तस्माद्विशेषो—विशेषको धर्मः अने-
कस्माद्विशेषोऽनेकधर्म इति तस्य चानेकस्य धर्मो यथा-
स्वं सोऽयमनेकधर्म इति । एकानेकप्रत्ययहेतुर्वा धर्मोऽने-
कधर्मः यत एष प्रत्ययो भवतीदमेकमिदमनेकमिति । तत्रै-
कप्रत्ययहेतुरभेदः अनेकप्रत्ययहेतुर्वा धर्मो विशेषः यथा श-
ब्दस्य विभागजत्वम् । सामान्यविशेषसमवायेभ्यः शब्दस्य
सदादिना विशेषेण निर्भक्तस्य तस्मिंस्तु द्रव्यं गुणः कर्म वेति
विभागजत्वात् संशयः । न हि किञ्चित् द्रव्यगुणकर्मणामन्यतमं

(१) स्पृशतीव—पा० २ पु० ।

विभागाज्जायमानं दृष्टं सर्वत्रासम्भवात् विभागजत्वं करोति सर्वतो व्यावृत्तेरिति । ननु च विभागजो विभ द्यते गुणः । सत्यम् अनभ्युपगतविभागजविभागस्यैतदेव यः पुनरभ्युपगतविभागजविभागः तस्यायं निर्णयहेतुः शब्दो विभागजत्वात् विभागजविभागवदिति । अस्तु स्यापि विभागजविभागासमवायिकारणकत्वात् विभागजा समवायिकारणकः शब्दो नान्यः पदार्थ इति । तदेवं गजत्वं विभागजविभागासमवायिकारणत्वं नते तीति सर्वतो व्यावृत्तः संशयहेतुः । तुल्यजातीयेष्वर्था विशेषस्योभयथा दृष्टत्वादिति । समानधर्मोपयोगाद्वा नेकधर्मो भवति । यद्वा द्वयस्यापि संशयकारणत्वेनोपयो मानधर्मस्यासमानस्य च समानस्य धर्मस्योपयोगाद्वा ऽसमानः सोऽनेकशब्दस्य विषयविशेष इति ।

कस्मात् पुनरेवमेव नोच्यते समानासमानधर्मोपपत्ते नैवं शक्यमभिधातुम् अनेकस्माद्व्यावृत्तो यो धर्म इति अ न लभ्यते लाघवं वा प्रयोजनमेकाक्षरापचयात् लाघवं प्र श्रित्यैवमभिधानं वा । यद्यनेकधर्मार्थोऽसाधारणार्थः असा धर्मः संशयकारणमिति, नेदं निरात्मकं जीवच्छरीरं अ मत्त्वप्रसङ्गादिदमप्यसाधारणत्वात् संशयहेतुः प्राप्तः । नै यथैव साधारणो धर्मः संशयहेतुरिति नान्वयिनः सा सति संशयहेतुत्वं भवति अन्वयव्यभिचारात् । एवं व्या णोऽपि सत्यसाधारणत्वे विपर्ययसम्बन्धस्याव्यभिचारा इति । तस्मान्नैकवृत्तित्वमनेकवृत्तित्वं संशयकारणत्वे निमि वा हेतुः । किं तर्हि ? साधारणासाधारणत्वे सति व्यभिचारा रौ संशयनिर्णयहेतू । यो व्यभिचारी स संशयहेतुः योऽव्य

स निर्णयहेतुरिति । यदि तर्ह्युभयोर्व्यभिचारित्वात् संशयहेतुत्वं ननु समानधर्मोपपत्तेरित्यनेनैव गतमेतत् गतार्थत्वात् न संशयहेतुत्वेन पृथक् उपादेयमिति । सत्यम् । न व्यभिचारितामन्तरेणान्यत् संशयकारणमपि तु व्यभिचारितायां सत्यां विधीयमानव्यभिचारः प्रतिषिध्यमानव्यभिचारश्चेति भेदः समानधर्मोपपत्तेरित्यनेन विधीयमानव्यभिचार उपदिश्यते विभागजत्वादित्यनेन प्रतिषिध्यमानव्याभिचार इति । एतावता पृथगभिधानम् ।

नञः पर्युदासविषयत्वादव्यभिचारिधर्मद्वयोपानिपातोऽनेकधर्म इति केचित्—एके त्वनेकधर्म इत्यन्यथा व्याचक्षते एकस्मादन्योऽनेकधर्म इति । एवं च विरुद्धाव्यभिचारिधर्मद्वयोपनिपातो लभ्यते यं प्रति तर्कमाहुः स च संशयहेतुः यथा श्रावणत्वकृतकत्वे शब्दस्येति । तदयुक्तम् । असम्भवात् । न ह्यव्यभिचारिणौ विरुद्धावेकस्मिन्नर्थे धर्मौ सम्भवतः वस्तुनो द्वैरूप्यासम्भवात् यद्युभावव्यभिचारिणौ स्यातात्म एकं वस्तु द्व्यात्मकं भवेत् । न चैतदस्ति तस्मान्नोभावव्यभिचारिणाविति । न चायं प्रयोगो युक्तः । कथमिति ? यदि तावदेवं प्रयुङ्क्ते यथा प्राक्तनो हेतुः तथाऽयमपीति । प्रसिद्धेन व्यपदेशा भवन्तीति सिद्धं पूर्वस्य हेतुत्वम् । विरुद्धार्थप्रतिपत्तिबाधितत्वादुत्तरस्यानभिधानम् । अथैवं क्रियते यथेदं द्वितीयमनुमानं न भवति तथा प्राक्तनमपीति । एवमपि प्रतिपन्नद्वितीयानुमानस्यासाधकत्वम् । अथ विरुद्धधर्मावेकत्र सम्भवत इति सम्भवान्न विरुद्धौ । कश्च विरुद्धार्थः किं सहासम्भवः आहो विरुद्धार्थसाधकत्वम् अथ स्वरूपमिति । यदि सहासम्भवः स नास्ति दर्शनात् । अथ विरुद्धार्थ-

साधकत्वं विरोधः तदपि न युक्तम् वस्तुनो ह्यात्मस-
म्भवात्। यदि विरुद्धार्थसाधकत्वमनयोर्धर्मयोर्भवेत् ए-
द्व्यात्मकमापद्येत। अथ स्वरूपमनयोर्विरुद्धमिति न वि-
धितं भवति यस्मात् कृतकत्वं न श्रावणत्वं श्रावणत्वं वा
कत्त्वं तस्मान्न संशय इति। उपेत्य वा विरोधं यदि
भ्यां कृतकत्वश्रावणत्वाभ्यां शब्दे संशयः क्रियते स
दर्शनादुपजातः कस्य दर्शनान्निवर्तते। न हि विशेषदर्श-
विशेषाकाङ्क्षा भवति यथोपलब्धसामान्यस्य वि-
ङ्क्षा भवति। प्रत्यक्षतो निवर्तिष्यत इति
न। योऽनुमानाभ्यां सन्निपातिताभ्यामर्थे संशयः स प्रत्य-
र्तिष्यत इति। तन्न युक्तम्। प्रत्यक्षाविषयत्वात्-
प्रत्यक्षस्य विषय इति किं शब्दो नित्योऽनित्यो वेति। आ-
वर्तिष्यत इति चेत्। न। आगमस्य च विचार्यमाणत्वा-
एवायं विचार्यते किं शब्दो नित्योऽथानित्य इति। न चा-
विषयो नागमविषयः अनुमानोपमानाभ्यां च नायं परि-
क्यते सोऽयमनिवर्त्यः संशयः प्राप्तः। भवतु किं नो बा-
न बाध्यते। यदा वस्त्वन्तरपरिच्छेदकमनुमानं न भव-
ऽनित्या बुद्धिः कृतकत्वादिति इदं खलु कृतकत्वं शब्दे
चानवधारितस्वभावो नित्योऽनित्य इति। तत्र चोप-
कृतकत्वमन्यत्र बुद्ध्यादौ संशयहेतुरिति सर्वमनुमानमनित्य-
न स्यात्। सर्वं चानुमानमयं न्यायो बाधत इति। यश्च
तुमानमूलमुच्छिनत्ति नासौ न्यायविदा युक्तोऽभिधातुम-
सम्भवात् नायमस्मान्न्यायो बाधते यस्य नित्यं किञ्चिद-
विरुद्धाव्यभिचारी भवति। अस्माकं तु पक्षे नित्यं किञ्चिद-
न। बाधापरिज्ञानात्-न भवता बाधविषयोऽवलोकितः कि-

त्यमस्माकं नास्तीति एतावन्मात्रमवलोक्य परपक्षे दोषोऽभिधीयते इति भवतामपि पक्षे विरुद्धाव्यभिचारी कृतावकाशः । कथम् ? सप्रतिघं विज्ञानं सत्त्वाद्रूपवदित्येकः, अप्रतिघं विज्ञानं नीरूपत्वाद्वेदनावदित्यपरः । तदेवमव्यभिचारिधर्मद्वयोपनिपातान्न सप्रतिघं नाप्रतिघं सिद्ध्येत् तस्मादपन्यायोऽयं विरुद्धयोश्च धर्मयोः सन्निपाताच्छब्दे संशय इति । धर्मयोः सातत्यादभिलापानुपपत्तिः नायमतद्धर्मा कदाचिदपि शब्द उपलभ्यते सततं तु तद्धर्मैव भवति श्रावणः कृतकश्चेति अभिलापो न स्यात् नित्योऽनित्यो वेति । न हि कदाचिदयं द्रष्टा एकस्मिन् वस्तुनि स्थाणुपुरुषधर्मावुपलभमानः शक्नुयाद्वक्तुं स्थाणुर्वा पुरुषो वेति । नैवं भविष्यतीति व्याहतमुच्यते । ननु च भवताभिधीयते नित्य इति मयाप्यभिधीयते अनित्य इति कथं नाभिलप्यते सोऽयं विरुद्धाव्यभिचारीन्यायो विचार्यमाणः सर्वथाऽनुमानं बाधत इति अलमनेन । अथ कृतकत्वश्रावणत्वे सहिते सम्भूय हेतू भवत इति ? तथापि कृतकत्वश्रावणत्वे सहिते न विभागजत्वादन्यत्रासम्भवाच्च संशयहेतू भवतः सोयमस्माद्भिद्यते यथैव विभागजत्वमन्यावृत्तित्वादसाधारणं शब्दे संशयं करोति तथा कृतकत्वश्रावणत्वे अपि शब्दवृत्तित्वादन्यत्रासम्भवाच्च संशयहेतू भवतः सोऽयमसाधारण एव न धर्मान्तरमतः तद्ग्रहणेनैवायं सङ्गृहीत इति तस्मादेकस्मादन्यो धर्मोऽनेकधर्म इति न वक्तव्यमिति । यदा पुनरेवम्भूतौ धर्मावेकस्य वस्तुनो भवतः तदोपलब्धा तस्य वस्तुनः किं प्रतिपत्तव्यमिति तदा तयोरेव धर्मयोः सामर्थ्याधिगतौ यत्नः कर्तव्यः नोभावेतौ साधने, कतरोऽत्र साधनं कतरश्चन साधनमिति सामर्थ्याधिगमे यत्नः करणीय इति । यत्नश्च. क्रियमाणोऽनित्यत्वसाधनेष्वेवावतिष्ठत इति । कुतः ? नित्यत्वस्य प्रमाणबाधितत्वात् तच्चोपरिष्टाद्वक्ष्यामः ।

तदेवं व्यवस्थितमेतत् अनेकधर्मोपपत्तेरसाधारणात्
संशय इति ।

विप्रतिपत्तेः संशय इति व्याहतार्थप्रवादो विप्रतिपत्तिश्शब्दः
व्याहतार्थप्रवादाविषयत्वमुपलभमानस्योपलब्ध्यनुपलब्ध्योर्व्य
स्थाने सति तद्गतविशेषानुस्मृतौ च सत्यां संशयो भवतीति
समानोऽनेकश्च धर्मो ज्ञेयस्थ उपलब्ध्यनुपलब्धी पुनर्ज्ञातृ
भाष्यम् । तत्रोपलब्ध्यनुपलब्ध्योस्तावत् पृथक् संशय
न भवतीति चर्चितमेतत् । समानोऽनेकश्च धर्मो ज्ञेयस्थ इ
न बुद्ध्यामहे । किमत्र धर्मः संशयकारणमथ ज्ञानमिति
संशयकारणमित्यनेकधा समर्थितम् । समानानेकधर्मज्ञानं तु
कारणं तच्च ज्ञातरि वर्तत इति नास्ति भेदः । समानानेक
पृथगभिधाने उक्तं प्रयोजनम् विधीयमानप्रतिषिध्य
भेदादिति । विप्रतिपत्तेरित्ययं वक्तृगतः संशयहेतुः ।
सम्यक्प्रतिपन्नाः के मिथ्येति श्रोतुः सन्देहो भवति एता
देन पृथगभिधानम् । समानधर्मः सर्व एवायमिति चेव
र्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति(१) सर्व एवायं
धर्मएवाऽभिधीयते तस्माद्वैयर्थ्यात् पृथगनेकधर्मोपपत्तेर्विप्र
इति न प्रयोजनमस्ति । अत एवं कर्तव्यम् । समानध
र्विशेषापेक्षो विमर्शः संशय इति । न । सूत्रार्थापरिज्ञानात्
मपरिज्ञायैवैतच्चोद्यते । यथा च भेदः समानानेकधर्मोपप
पत्तेश्चेति तथा वर्णितम् । अपरे पुनः समानधर्मोपपत्त्या
पदैः पृथक् पञ्चविधं संशयं वर्णयन्ति । समानधर्मोप
षापेक्षो विमर्शः संशय इति एवं शेषेषु पदेषु । तन्न युक्त

(१) समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शश्च प्रतिपत्ते
१ पु० । विमर्शश्चेति क्वचित् ।

लब्ध्यनुपलब्ध्यव्यवस्थायाः पूर्वपदविशेषणत्वात् समानधर्मोपपत्तौ सत्यामुपलब्ध्यनुपलब्ध्यव्यवस्थायां च सत्यां विशेषापेक्षो विमर्षः संशय इति सूत्रार्थः। एवमनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति वाच्यम् । तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्था पृथक् संशयकारणमिति । उपलब्ध्यनुपलब्ध्योर्द्वैविध्यात्(१) संशयो न युक्तः, कुतः ? लोकविरोधात्—उपलब्ध्योर्द्वैविध्यात् संशयो भवतीति ब्रुवाणो लोकं बाधते । कथमिति ? यत्किञ्चिदयमुपलभते सर्वत्रास्य संशयेन भवितव्यम् । किं कारणम् ? उपलभ्यमानं द्वेधा भवति । उपलब्ध्योर्द्वैविध्यात्तु यः संशयो भवति तस्य कुतो निवृत्तिः ? विशेषदर्शनान्निवर्त्तते इति चेत् विशेषेष्वप्येवं—य एते विशेषा उपलभ्यन्ते किमेते सन्त आहोऽसन्त इति यावद्यावदुपलभ्यते सर्वत्रोपलब्धिद्वैविध्यात् संशय इत्यनिवर्त्यः संशयः। एवमनुपलब्धिद्वैविध्ये ऽपि वक्तव्यम् । न चास्य क्वचित् समाश्वासः स्यात् । यदाऽयमपवरकादौ सर्पादीनुपलभते तदा सर्पवत् तद्रूप उतासर्पवदिति संशयः अयमपि संशयोऽनिवर्त्त्य एवेति सर्वत्राश्वासो न स्यात् । येषां च पञ्चविधः संशय इति सूत्रार्थः तैरप्यस्य कारणकृतो भेदो वक्तव्यः स्वभावकृतो वा । तद्यदि कारणकृतो ? न पञ्चविधो, ऽनेकरूपः संशय इति प्राप्तम्। अथ स्वभावभेदात् ? न, स्वभावभेदस्यासम्भवादेकरूपः संशयः संप्रीतिः संशय इति । तस्मात् पञ्चविधः संशय इति न सूत्रार्थः ।

समानधर्मग्रहणान्न संशयो धर्मिविषयत्वात्—यदिदमुच्यते समानधर्मोपपत्तेः संशय इति । तदयुक्तम् । धर्मिविषयत्वात् । न हि समाने धर्म उपलब्धे धर्मिणि संशयो (न) युक्तः धर्मधर्मिणोर्भेदात् । न हि गवि दृष्टे अश्वे संशयः ( धर्मिणश्चा-

(१) अत्र 'च' इति तात्पर्यटीकातोऽधिकमवगम्यते ।

दृष्टत्वात् नानुपलब्धे न निर्णीतेऽर्थे संशयो भवतीति
घातः । धर्मधर्मिभावाद् संशय इत्येके तावत्
ब्रुवते—धर्मे दृष्टे धर्मिणि संशयः धर्मधर्मिभावात् ।
गवि दृष्टे अश्वे संशयो भवति ) धर्मधर्मिभावानुपपत्तेः ।
नानात्वानिवृत्तेः, न हि धर्मधर्मिभावेन नानात्वं
अथ धर्मधर्मिभावो नियामकः ? इच्छादिसूत्रं तर्हि
ते । कथमिति ? इच्छादयः प्रतिसन्धानादात्मानं
सूत्रार्थः । अत्र परः प्रत्यवस्थितः कार्यकारणभावात्
नमिति नानात्वस्याबाधनादित्यनेन निवर्तेत । इह
धर्मधर्मिभावादिति पुनर्ब्रुवता नानात्वमेव धर्मधर्मि
यामकमुच्यत इति शक्नुयात् परोऽपि वक्तुं कार्य
भावो नियामक इति । तस्मादपव्याख्यानमेतत् धर्म
वात् संशय इति । अथ समानधर्मोपलब्धेरन्यस्मि
धर्मिणि संशयो भवतीति कः परिहारः ? । अयं
बहुव्रीहिः समासोऽतो धर्मिणोऽभिधानं—समानधर्मोपपत्ते
न पदेन बहुव्रीहिसमासे धर्म्येव व्यपदिश्यते । कथं
धर्मो यस्य स भवति समानधर्मा समानधर्मण(१)
त्तिः समानधर्मोपपत्तिः । किमुक्तम्भवति ? समानधर्मवतो
दर्शनादिति ।

विशेषापेक्षो विमर्षः संशय इति विशेषापेक्षो विशे
पेक्ष इति । अथ सा विशेषस्मृतिः किंविशेषविषया(२)

( ) एतन्मध्यस्थः पाठोऽनुपयुक्त इति सूचितं २ पु
(१) समानधर्मणत इति—पा० २ पु० । स च प्रमादि
(२) कश्चासौ विशेषश्चेति किंविशेषः अनुपलब्धपूर्वो
ऽस्येत्यर्थ इति ता० टी० ।

विषयविशेषविषया उतान्यविषयेति ? योसौ संशयस्य विषयः तं समानधर्माणमुपलभते तस्यायं विशेषाननुस्मरति उतान्यस्येति । यदि तावत् तस्य ? तन्न युक्तं तद्विशेषाणां क्वचिदननुभूतत्वात्-योऽर्थः पूर्वमुपलब्धविशेषः तद्गतान् विशेषाननुस्मरतीति युक्तम् तद्विशेषाणामनुभूतत्वात्, यदा पुनरयमनुपलब्धपूर्वविशेषः सामान्यत उपलभ्यमानः सन्दिह्यते तत्र विशेषानुस्मृतिः कथम् ? तद्विशेषाणामननुभूतत्वादिति । न । सामान्यवचनत्वात् । विशेषापेक्ष इति सामान्यवचनं पुनरनेनावधार्यते तस्य वान्यस्य वेति । यदा तद्गता विशेषाः सुस्मूर्षिता भवन्ति तदाऽनुभूतेषु विशेषविषया स्मृतिः, यदा त्वनुपलब्धपूर्वेऽर्थे संशयः तदा सादृश्यादन्यगतान् विशेषान् सुस्मूर्षत इति । एवं तावद्व्यवस्थितं त्रिविधः संशय इति ।

अनेन च संशयलक्षणेन यान्यविरुद्धानि संशयलक्षणानि तान्यपि संगृहीतानि । यथा काश्यपीयम्(१) "सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशय" इति । अस्यार्थः सामान्यप्रत्यक्षादिति सामान्यवतः प्रत्यक्षाद्धर्मिण इति, न पुनरयं पदार्थः सामान्यस्य प्रत्यक्षादिति । विशेषाप्रत्यक्षत्वमव्यवस्थितविशेषत्वं नास्मिन् विशेषा व्यवस्थिता इति, विशेषस्मृतेश्च संशय इति समानम् । कथं पुनरनेन सूत्रेणासाधारणोऽपि लभ्यत इति ? लभ्यते व्यभिचरितत्वात्-व्यभिचारि साधारणं तच्चासाधारणे ऽपि व्यभिचारित्वमस्तीति लभ्यते । अनेकधर्मोपपत्तिस्तर्हि पृथङ्न पठितव्या अन्वयव्यतिरेकभेदविवक्षायां पृथगभिधानं पुनः संशयकारणभेदविवक्षयेति । ये त्वत्र विशेषाप्रत्यक्षाद्विशेषस्मृतेश्चेतिपदयोः

(१) कणादसूत्रम् २ अ० २ आ० १७ सू० ।

पौनरुक्त्यं वर्णयन्ति—सामान्यप्रत्यक्षाद्विशेषस्मृतेश्च इत्यभिधीयमाने किल गम्यत एतद्विशेषाप्रत्यक्षादिति, काश्चिद्विशेषान् प्रत्यक्षान् स्मरति । तन्न । सूत्रार्थाज्ञानात् । नायं सूत्रार्थः विशेषाणामप्रत्यक्षत्वमिति । त्वव्यवस्थितविशेषवत्त्वं—नास्मिन् विशेषा व्यवस्थिता नायं दोषः इति ।

अन्ये(१) तु संशयलक्षणमन्यथा व्याचक्षते—दर्शनाद्विशेषोपलिप्सोर्विमर्शः संशय इति । तैरपि स्यावधारितत्वात संशयस्य विषयो वक्तव्यः । धर्मीति ननूक्तः संशयस्य विषयो धर्मी ?। सत्यमुक्तो न पुनर्युक्तः युक्तः ? यदि तावद्धर्मव्यतिरिक्तं धर्मिणमभ्युपैति व्याह वति । धर्मधर्मिणोश्च नानात्वाभ्युपगमे धर्मस्यावधृतत्वात् णश्चादृष्टत्वात् न संशयः । न ह्यन्यस्मिन् दृष्टे ऽन्यत्र संशय ति । अथाप्यस्मद्दिशा साधर्म्याभिधानेन धर्म्येवोच्य युक्तं सधर्मणो भावः साधर्म्यं, साधर्म्यमिति च धानेन धर्मोऽभिधीयते न धर्मी, न च युक्तोऽन्यस्य नादन्यत्र संशय इति । अथार्थान्तरभावं नाभ्युपैति साधर्म्यस्यावधृतत्वात् क ? संशय इति । यदि चायं नोपलभते कस्यायं विशेषमुपलिप्सेत । न हि साधर्म्यस्य षाः सम्भवन्तीति । अथ सामान्यवतो विशेषा ? इति तस्यादृष्टत्वादित्युक्तम् । न सामान्यस्य विशेषाः सन्ति मान्यवतो विशेषा भवन्तीत्येवं ब्रुवता सामान्यवि भेदोऽनुज्ञातो भवति । व्यर्थश्चाभिधानं न सामान्यस्य वि द्वतो विशेषा इति । उपलब्ध्यनुपलब्ध्यव्यवस्थाने च

(१) बौद्धाः ।

र्म्यदर्शने सत्यपि विशेषोपलिप्सायां च न संशयो भवतीति अनेकधर्मदर्शना-दुपलब्ध्यनुपलब्ध्यव्यवस्थात इति वक्तव्यम्
दिति च ।

समानानेकधर्मोपपत्तेरित्येवमादिवाक्यं संशयलक्षणं तद्विचार्यते किन्तावदयं कारणोपदेश आहो संशयस्वरूपावधारणमिति ? । यदि कारणनिर्देशो ? ऽत्यल्पमिदमुच्यते समानानेकधर्मादिभ्य इति, अन्यान्यपि संशयकारणानि, तान्युपसंख्येयानि । यथाऽऽत्म-मनःसंयोग—आन्तरस्य आत्ममनःसन्निकर्ष, इन्द्रियार्थसन्निकर्षो बाह्यस्येति । अथ स्वरूपावधारणं ? कारणनिर्देशोऽनर्थकः संशीतिः संशय इति वक्तव्यम् । अस्तु तावत् कारणावधारणम् । ननूक्तं कारणान्तरमप्युपसंख्येयमिति ? न, नेदं कारणावधारणा-र्थमपि स्वसाधारणकारणनिर्देशोऽयम् । तस्मादिन्द्रियार्थसन्निक-र्षादीनामप्रसङ्गः । कुतः । प्रत्यक्षसाधारणत्वात् । स्वरूपनिर्देशो वा भवतु—इदमेवास्य स्वरूपं समानधर्मादिभ्यो जन्मेति । सोऽय-मेवम्भूतः संशयो विचाराङ्गतयोपादीयते । संशयवद्विपर्ययो-ऽपि विचाराङ्गम् सोऽपि पदार्थत्वेन वक्तव्यः ? सत्यमसौ प-दार्थो न तु विचाराङ्गमित्यतो नाभिधेयः । कथं न विचाराङ्गं ? यथा सन्दिग्धस्तद्विशेषप्रतिपत्तये यतते नैवं विपर्यस्त(१) इति त्यतो न्यायविद्यानङ्गत्वात् नाभिधीयते ॥

यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् ॥ २४ ॥

यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् । यमर्थमधिकृत्येति व्यवसायोऽधिकारः । कस्य व्यवसायः ? सुखदुःखसाधनानाम् । इदं सुखसाधनमिति ज्ञात्वा तत्प्राप्तये प्रयतते इदं दुःखसाधन- सु

(१) विपर्ययस्य—इति २ पु० ।

मिति चाधिगम्य दुःखहानायेति । सुखदुःखयोरवाप्ति
भ्यामयं लोकः प्रयुज्यत इति सुखदुःखाप्तिहानी प्र
नमिति । अनेन च प्रयोजनेन सर्वे ऽर्थाः सङ्गृहीता इ
ति । एतस्मिंश्च सूत्रार्थे परस्य दोषविवक्षया चोद्यमानस्य
मशक्तस्य व्याहारो लौकिकोऽयमर्थः प्रयुज्यतेऽनेनेति प्र
नमिति । न चानेन न्यायस्य(१) किञ्चित् क्रियत इति न
ङ्गभावो नास्तीति । यत्तावल्लौकिकोऽयमर्थ इति एतद
प्रकृष्टतार्किकादन्यो वक्तुमर्हति—अयमेव च पदार्थो
न प्रमाणादय इति । कश्चासौ लौकिक इति ? यदि प्र
पपन्न इत्ययमर्थः ? अतिदोषोऽयं प्रमाणोपपन्नं न वक्तव्यं
अथान्यः लौकिकशब्दार्थः ? तन्न बुध्यामहे कथमन्य इति।
प्रयोजनं न्यायस्याङ्गं न भवतीति । तदयुक्तम् । या खलु
योजना चिन्ता सा न न्यायाङ्गमिति परीक्षाविधेस्तु प्र
ङ्गं प्रयोजनमेव, तन्मूलत्वात् परीक्षाविधेरिति ॥

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं
स दृष्टान्तः ॥ २५ ॥

लौकिकपरीक्षकाणामिति सूत्रम् । बुद्धिसाम्यविषयो
न्त इति सूत्रार्थः । एवं चाकाशाद्यवरोध इति । यदि पुनः
धार्यते लौकिकानां परीक्षकाणां च यो विषयः स दृष्टान्त
लौकिकार्थो न दृष्टान्तः स्यादाकाशादिरिति । उदाहरण
लौकिकपरीक्षकविषयस्याभिधानं न तु लौकिकपरी
णामेवेति ।

---

(१) न्यायस्येतिस्थाने परीक्षाविधेः इति पा० २ पु०।
(२) न ऋते—इति छेदः ।

सोऽयं दृष्टान्तः सारूप्यव्युत्पत्त्यर्थो वा स्यादसिद्धसाधनार्थो वा । यदि तावत् सारूप्यव्युत्पत्त्यर्थस्तदा नोपमानाद्भिद्यते । अथासिद्धसाधनार्थो नोदाहरणाद्भिद्यते । यद्युपमानं प्रमाणेऽन्तर्भावः । अथोदाहरणमवयव इति न पृथक् दृष्टान्तोऽस्तीति । इदं तूत्तरमप्रतिसमाधेयमिति पश्यामः । कस्मात् । त्रयस्याप्यपरिज्ञानात् । एवं ब्रुवता न दृष्टान्तो नोदाहरणं नोपमानं विज्ञातमिति । सारूप्यव्युत्पत्त्यर्थं तावदुपमानं न भवतीति वर्णितम् दृष्टान्तः सारूप्यव्युत्पत्त्यर्थः असिद्धसाधनार्थो वेति दृष्टान्तो न भवति । उदाहरणार्थमुदाहरणं वर्णयन्तो वक्ष्याम इति ॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः॥२६ ॥

सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

इदमित्थम्भूतं चेति भाष्यम् । इदमिति सामान्यतोऽवगममाह । इत्थम्भूतं चेति विशेषः । एतदुक्तम्भवति—सामान्यविशेषवदर्थाभ्यनुज्ञा सिद्धान्त इति । अस्यार्थस्य प्रदर्शनार्थं(१) सूत्रम् तन्त्राधिकरणाभ्युमगमसंस्थितिः सिद्धान्त इति ।

किं पुनरिदं सूत्रं लक्षणार्थमाहो विभागार्थमिति । किं चातः ? यदि लक्षणार्थं तन्त्राधिकरणग्रहणं न कर्तव्यं एतावद्भवत्वभ्युपगमव्यवस्था सिद्धान्त इति। अथ विभागार्थं ? सर्वतन्त्रग्रहणं कर्तव्यं प्रतिज्ञादिवत् । यथा प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति समस्ताभिधानम्, एवं सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरिति वक्तव्यम् । लक्षणार्थं च सूत्रान्तरं वक्तव्यम् । सर्वतन्त्रप्रतितन्त्राभ्युपगमसंस्थित्यर्थान्तरभावादित्यस्य सूत्रार्थो(२)

(१) अस्यार्थप्रदर्शनार्थम्—पा० २ पु० । (२) सूत्रस्यार्थो-इति साधुः ।

ऽन्यो वक्तव्यः । अथेदं विभागार्थं ? तथापि(१) सूत्रं परित्यज्यताम् । अथ विभक्तानां पुनर्विभागः ! त्रि चास्य शास्त्रस्य प्रवृत्तिरिति व्याहतम् । विभागश्च नियम विभक्तानां विभागः किमर्थः ? । यदि नियमार्थः आद्येन कृतत्वान्न प्रयोजनमस्तीति । तस्मात् पूर्वमुत्तरं वा सू र्थमिति । नानार्थम् । आद्यस्य लक्षणार्थत्वादुत्तरस्य भागार्थत्वादिति । विभागश्च नियमार्थ इत्युक्तम् । अनेकधा भिन्नस्य सिद्धान्तस्य चतुर्धा संग्रह इति दर्शयति । अथाद्यं सूत्रं कथं लक्षणार्थमिति । तन्त्राधि नामर्थानामभ्युपगम इति सूत्रार्थः । तन्त्रमधिकरणं ये नां भवति ते तन्त्राधिकरणाः तेषामभ्युपगमसंस्थि रित्थम्भावव्यवस्था । धर्मनियमः सिद्धान्तो भवतीति । किमुक्तं ति ? योऽर्थो न शास्त्रितः तस्याभ्युपगमो न सिद्धान्त इ

सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्र सिद्धान्तः ॥ २८ ॥

सर्वेषां सम्प्रतिपत्तिविषयः(३) सर्वतन्त्रसिद्धान्त यथा प्रमाणानि प्रमेयसाधनानि ।

न दृष्टान्तात् सर्वतन्त्रसिद्धान्तो भिद्यते विप्रतिपत्तिरिहापीति । भिद्यत इत्याह—दृष्टान्तो हि प्रतिवादिभ्यामेव निश्चितः न पुनरेवं सर्वतन्त्रा इति । अनुमानागमयोराश्रयो दृष्टान्तो नैवं सर्व

(१) यथापि—पा० २ पु० । अथापीति क्वचित् ।
(२) अभ्युपगमं स्थितिः—पा० २ पु० ।
(३) सम्प्रतिपत्तिर्विषय इति क्वचित् ।

द्धान्त इति । यद्यनुमानागमयोराश्रयो दृष्टान्त इति प्रत्यक्षेऽपि प्रसङ्गः प्रत्यक्षमप्यनुमानागमयोराश्रयः तत्कारणत्वात् । यः प्रत्यक्षविषयः सोऽर्थो दृष्टान्तोऽधिगतोऽर्थः कथ्यत इत्यनुमानागमयोराश्रयः, अधिगमसाधनं तु प्रत्यक्षं, तस्मान्न प्रत्यक्षे प्रसङ्गः ॥

**समानतन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ॥ २९ ॥**

सामान्यविशेषवद्वतां नियमेनाभ्युपगमः प्रतितन्त्रसिद्धान्त इति । यथा भौतिकानीन्द्रियाणीति योगाना(१)मभौतिकानीति सांख्यानामिति ॥

**यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥ ३० ॥**

वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति । तस्योदाहरणं भाष्ये । यथेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति(२) ॥

**अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥**

अपरीक्षिताभ्युपगमादिति सूत्रम् । अपरीक्षितोऽसूत्रित इति । योऽर्थः सूत्रेषु नोपनिबद्धः शास्त्रे चाभ्युपगतः सोऽभ्युपगमसिद्धान्त इति । यथा नैयायिकानां मन इन्द्रियमिति । वैशेषिकाणां नैयायिकानां च श्रोत्रमाकाशमिति ।

अपरीक्षितः शास्त्रानभ्युपगतः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति न युक्तम् । कुतः ? परावज्ञानस्यायुक्तत्वात् । यदि तावत् परस्यासा-

(१) योगानां—वैशेषिकाणाम् । (२) गौ० सू० ३ अ० १ आ० १सू०

मर्थ्यं बुद्ध्वा नायं समर्थ इति प्रवर्त्तते तदाऽनेन ...
प्रतिपादितो भवति, किन्तु विप्रतिपादितः । पश्चा...
तस्य प्रतिपादयितव्यम् । अथ परिज्ञातसामर्थ्यं पुरुषमवगा...
तदपि न । अतिशयबुद्धिमतोऽवज्ञानस्यायुक्तत्वात् । ...
यं सूत्रार्थोऽशास्त्रिताभ्युपगमः सिद्धान्त इति ।

सर्व एवायं पक्षः स्वमुखेनार्थापत्त्या वा ...
इति किमनेनातिविस्तृतेनेति केचित् । पक्षपर्याय...
सिद्धान्त इत्यपरे । पक्षस्य किलायं पर्यायः ...
इति । सिद्धान्तः पक्षपर्यायोऽयमिति न ...
सिद्धान्त इत्युपपन्नप्रमाणकोऽयमर्थः तत्प्रसाद...
मः पक्ष इत्यन्यतरत्वादिविप्रतिपन्नस्यान्यतरं प्रति ...
वस्तुनो यदुपादानं स पक्षः यश्च कारकशब्दो यश्च ...
ब्दो नैतौ पर्यायौ, अन्यथा परशुश्छेदनमिति । परशुरि...
दा अभिधीयते यदा पुरुषव्यापारनिरपेक्षं वस्तु सा...
नतयाऽवतिष्ठते, छेदनमिति च यदोद्यम्योद्यम्य दारुणि ...
ते, तावेतौ छेदनपरशुशब्दौ वस्तुनः क्रियासम्बन्धापेक्षौ ...
इति । तथा सर्व एव कारकशब्दा न द्रव्यमात्रे ...
क्रियामात्रे प्रवर्तन्ते । किन्तर्हि ? क्रियासाधने क्रिया...
युक्त इति । कारकशब्दश्च पक्षो न सिद्धान्तः । स कथं ...
भविष्यतीति । सर्वतन्त्रसिद्धान्तश्च पक्षपर्याय इति अहो ! ...
ब्देषु कौशलं भदन्तस्य, पक्षो विचारणायामिष्टोऽर्थ ...
भिधीयते अविचारणीयश्चार्थः पक्षेऽन्तर्भवतीति चित्रम् ...
पुनः सर्वतन्त्रसिद्धान्तं नैव प्रतिपद्यते तेनापि सर्वतन्त्र...
न्तं निह्नुवानेन तदसत्त्वप्रतिपादको न्यायोऽभिधेयः, ...
न्यायाभ्युपगमः स सर्वतन्त्रसिद्धान्त इति व्याहतं ...

सिद्धान्तो नास्तीति । अथ न्यायमपि न प्रतिपद्यते, अनिवृत्तो व्याघातः वचने ऽवचने च, यदि तावन्न्यायोऽस्तीति ब्रवीति प्रतिपादयति च नास्ति चेति व्याहतम् । अथ ब्रवीति न अवचनेऽस्यार्थो न सिद्ध्यति । तस्मात् सर्वतन्त्रसिद्धान्तो नास्तीति सम्भ्रमव्याकृतम् । इदं च तावद् भवान् प्रष्टव्यो जायते किं पक्षः सिद्धान्तसामान्यं भवति, अथ संग्रहः पक्षशब्देन सिद्धान्तस्य, अथ सिद्धान्तस्य पक्षशब्दः पर्याय इति ? तद्यदि तावत् सिद्धान्तसामान्यं तन्नास्त्यव्यापकत्वात् । न हि पक्षः सर्वतन्त्रसिद्धान्तं व्याप्नोति असाध्यत्वात् । यथा सत्ता द्रव्यगुणकर्माणि व्याप्नोति व्यापकत्वात् सामान्यं भवति, नचैवं पक्ष इति पर्यायशब्दोऽपि न भवतीत्युक्तम् । यदि च पक्षः सिद्धान्तपर्यायः सर्वतन्त्रसिद्धान्तः साध्यो जायते । सर्वतन्त्रसिद्धान्तः साध्यश्चेति व्याघातः । अर्थापत्तितोऽधिकरणसिद्धान्तस्याभेद इति चेत्—अथापि मन्येथाः अर्थापत्तितोऽधिकरणसिद्धान्तो न भिद्यते, वाक्यार्थप्रतिपत्तौ तद्विपरीतवाक्यार्थप्रतिपत्तिरर्थापत्तिर्वाक्यानुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥**

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । अवयवानां विभागोद्देशार्थं सूत्रम् । विभागोद्देशश्च नियमार्थः । किं नियन्तव्यं ? दशावयवं ऽप्यवयवं च वाक्यं; एके तावद्ब्रुवते दशावयवं वाक्यम् । अपरे ऽप्यवयवमिति । उभयनियमज्ञापनार्थः प्रतिज्ञादीनां विभागोद्देश इति । कथं पुनर्जिज्ञासादयोऽवयवा न भवन्ति ? पराप्रतिपादकत्वात् । परप्रतिपादका ये वाक्याङ्गभूताः इतरेतरप्रत्यायितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति तेऽव-

यवाः । वाक्याङ्गत्वमवयवार्थः । किं पुनर्वाक्यम् ? प्रतिज्ञादिभिरुपकृतस्य(१) विशेषावस्थापनमर्थः तद्वाक्यार्थं संहत्यैते पञ्च निष्पादयन्तीत्यवयवा इत्युच्यन्ते। पुनर्जिज्ञासादयः परप्रतिपादका इत्यतो न वाक्यस्याङ्ग इति । निश्चितत्वाच्च—निश्चितश्च साधयिता भवति । न जिज्ञासासंशयौ स्तः । प्रयोजनमपि साधनादेव गम्यते । वाक्यगात्रिश्चेति—न ह्यशक्यमप्रयोजकं वा कश्चित् साधयति तस्मात् प्रयोजनशक्यप्राप्ती अपि न वाक्यावयवौ । प्रकरणे तु जिज्ञासादयः समर्था इति भाष्यम् । प्रकरणमुत्थापयन्तीति । न हि जिज्ञासादीनन्तरेण प्रकरणस्योत्थानमस्तीति प्रकरणोत्थापका नावयवाः जिज्ञासादय इति । परप्रतिपादकत्वाच्चु प्रतिज्ञादीनामवयवत्वमिति ते उपदिश्यन्ते । न्यवयवमपि वाक्यं यथा न तथोपनयनिगमनयोरर्थान्तरभावं वर्णयन्तो वक्ष्यामः ॥

साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

तेषां त्ववयवत्वेन सामान्येन संगृहीतानामिदानीं विशेषकं लक्षणमुच्यत इति । साध्यनिर्देशः प्रतिज्ञा। तत्र प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यस्तस्य निर्देशः प्रतिज्ञा-परिग्रहवचनम् । उदाहरणमनित्यः शब्द इति।

सिद्धत्वाद्धर्मिणो न साध्यतेति केचित्—धर्मी किल ... क्षणः सिद्ध एव सिद्धश्च साध्यो न भवति । नैष दोषः प्रज्ञापनीयधर्मविशिष्टस्येति वचनात् । न ब्रूमो धर्मी साध्यमपि तु प्रज्ञापनीयधर्मविशिष्टो धर्मीति । यदि प्रज्ञापनीयो ? न विशेषणम्, अथ विशेषणं ? न प्रज्ञा...

(१) रूपस्कृतस्य इति क्वचित्पाठः ।

नासिद्धं विशेषणं भवतीति सिद्धेनायं विशिष्यते न सा-ध्येनेति । सत्यमप्रज्ञातं विशेषणं न भवतीति, प्रज्ञातं त्वि-दमनित्यत्वं घटे शब्दस्य साध्यमिति । एवं तर्हि शब्द-स्यानित्यत्वं साध्यं न शब्द इति ? शब्दस्येति विशेषणान्न दोषः—शब्दस्येति ब्रुवता नानित्यत्वमात्रं साध्यत्वेनानुज्ञायते न धर्मिमात्रं । किं तर्हि ? धर्मिणः शब्दस्य प्रज्ञातस्यानित्य-त्वस्यान्यधर्मत्वेन योऽयं विशेषणविशेष्यभाव इतरेतरनियामकत्वेन नियमः स साध्यः स चोभयाश्रयो भवति । उभया-श्रयत्वे सति किमुक्तम्भवति ? धर्मी विशेषणं धर्मो वा वि-शेषणमिति(१) शब्दस्यानित्यत्वमनित्यत्वस्य वा शब्द इति । धर्मी विशिष्यत इति युक्तम् सामान्यतोऽधिगतत्वा-द्विशेषतो ऽनधिगतत्वाच्च विशेषप्रतिपादकत्वाच्चानुमानस्य । न च पुनर्धर्मस्य सामान्याधिगमोऽस्ति । न नास्ति किमयं धर्मः श-ब्दस्य उतान्यस्य घटस्येति । एवं तर्हि शब्दे ऽनित्यत्वमित्ययमर्थः साध्यः तस्य च न कृतकत्वादियोग इति युक्तम् प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः तस्य निर्देशः प्रतिज्ञा । उभयावधारणप्राप्तावन्यतरावधारणे च दोषः यदि साध्य-निर्देशः प्रतिज्ञेति प्रतिज्ञालक्षणं ततः पूर्वोत्तरे द्वे अवधारणे न कल्पेते । कथम् ? साध्यनिर्देश एव प्रतिज्ञेति प्रतिज्ञाऽवधृता, न साध्यनिर्देशः, प्रतिज्ञाऽन्यथा नास्ति, साध्यनिर्देशोऽन्यथाऽप्य-स्तीति प्राप्तम् । ततश्च साध्यनिर्देशो न प्रतिज्ञाऽवधृताऽतोन सा-ध्यनिर्देशः लक्षणं व्यतिरेकित्वादिति । अथ साध्यनिर्देशः प्रति-ज्ञेति साध्यनिर्देशोऽवधृतः, न च प्रतिज्ञा, साध्यनिर्देशो ऽन्य-था नास्ति, प्रतिज्ञाऽन्यथा ऽप्यस्तीति ? एवमपि साध्यनिर्देशो न

(१) धर्मी विशेष्यो धर्मो विशेषणमिति २पु० पा० ।

प्रतिज्ञालक्षणम् अव्यापकत्वात् । यदपि व्यतिरेकि लक्षणम् यथा विषाणित्वं गोः । यदप्यव्यापकं यथा वत्त्वं द्रव्यस्य । अथ पूर्वोत्तरे ऽवधारणे न क्रि तथापि किल वाक्यमनर्थकं भवति, न चान्या गति तस्मात् साध्यनिर्देशः प्रतिज्ञेति न युक्तम् ।

सर्वस्मिन् वाक्ये ऽवधारणमिति तु न बुध्यामहे—न गोपालकेन मार्गे ऽपदिष्टे एष पन्थाः श्रुघ्नं(१) गच्छतीति धारणस्य विषयं पश्यामः, अवधारणस्य तु विषयः सामान्य नियमः—येन वाक्येन समानश्रुत्याऽनेकार्थो गम्यते तत्रातिप्र वतिप्रसङ्गनिराकरणार्थमवधारणमिति, न पुनः साध्यनि प्रतिज्ञेत्युक्ते क्वचित् प्रसङ्गोऽस्ति यन्निराकरणायाव क्रियेत । सर्वत्र च सावधारणं कुर्वाणो लोकं बाधते यत्र च विशेषणस्यावकाशस्तत्रावधारणस्यापीति नायं पूर्वोत्तरेऽवधारणे न कल्प्येते इति । ननु साध्यनि प्रतिज्ञेत्युक्ते साध्ययोर्हेतुदृष्टान्तयोरपि प्रसङ्गो यथा शब्दश्चाक्षुषत्वात् नित्यः शब्दोऽस्पर्शत्वाद्बुद्धिवच्चेति । न वार्थापरिज्ञानात् साध्यनिर्देशः प्रतिज्ञेति प्रज्ञापनीयधर्म ष्टस्य धर्मिणः परिग्रहवचनम् । न च चाक्षुषत्वं प्र यधर्मविशिष्टस्य धर्मिणः परिग्रहवचनमपि तु धर्मवि ऽयम् चाक्षुषत्वादिति । तथा बुद्धेर्नित्यत्वमपि । पुनः साध्यनिर्देशग्रहणादसाध्यनिर्देशनिवृत्तिः—साध्यनिर्देश हणात् किलासाध्यनिर्देशो निवर्त्यते । असाध्यं च द्वेधा द्धमनुपपद्यमानसाधनं च । तत्र साध्यनिर्देश इत्यने चनेनोभयं निवर्त्तते सिद्धमनुपपद्यमानसाधनं च । तत्र

(१) श्रुघ्नं नगरम् ।

पद्यमानसाधनं शब्दाचाक्षुषत्वं बुद्धिनित्यत्वं च। तस्मान्न तत्र प्रसङ्गः। अथ पुनः कृतकत्वाद्यन्यतरपक्षासिद्धं साध्यतयाप्युपाददीत तदा कृतकत्वादेः साध्यनिर्देशस्य प्रतिज्ञात्वं प्राप्तमिति। नैष दोषः विकल्पानुपपत्तेः यदि तावदेवं ब्रवीति कृतकत्वं साध्यमिति ? तदा सूत्रार्थापरिज्ञानादिति परिहारः। अथ कृतकः शब्द इत्येतत् साध्यमित्येवं प्रत्यवतिष्ठते, तदाभ्युपगम एव दोषत्वेन दर्शित इति न किञ्चिद्बाध्यते। यच्चेदमुच्यते—असाध्यनिर्देशनिवृत्तिद्वारेण साध्यनिर्देशः प्रतिज्ञेत्युच्यत इति, तद्विधीयमानप्रतिषिध्यमानशब्दार्थाभ्युपगमान्नियमो न युक्तः—क्वचिद्वाक्ये विधीयमानोऽर्थोऽभिधीयते क्वचित् प्रतिषिध्यमान इति, एकान्तवादिनस्तु दोषः यथा च न प्रतिषिध्यमान एव पदार्थो भवति तथोपरिष्टाद्वक्ष्याम इति। साध्यनिर्देश इति च प्रतिज्ञायां साध्ययोर्हेतुदृष्टान्तयोः प्रसङ्ग इति। न प्रसङ्गः सिद्धान्तविशेषणत्वात् साध्यशब्दस्य, सिद्धान्तविशेषणोऽयं साध्यशब्दः न साध्यमात्रं, तथा च कः प्रसङ्गो हेतुदृष्टान्तयोः, सिद्धान्तश्चानन्तरोक्त्या साध्यशब्दस्य विशेषणं भवति सिद्धान्तानन्तरमवयवाभिधानात्। यद्यनन्तरोक्त्या सिद्धान्तो विशेषणं तन्निर्देशः प्रतिज्ञेति कार्यं ? न, सर्वतन्त्रसिद्धान्तनिराकरणार्थत्वात्। यदि तन्निर्देशः प्रतिज्ञेत्युच्यते सर्वतन्त्रसिद्धान्तोऽपि प्रकृतत्वात् तच्छब्देनानुकृष्येतेति तन्निर्देशोऽपि प्रतिज्ञेति स्यात्, अतः साध्यग्रहणेन साध्यसिद्धान्तः सम्बध्यते न सर्वतन्त्रसिद्धान्त इति सामर्थ्यात् सर्वतन्त्रसिद्धान्तनिराकरणमिति। यद्यप्ययं सामान्यशब्दः तन्निर्देशः प्रतिज्ञेति तथापि सामर्थ्यात् सर्वतन्त्रसिद्धान्तो निराक्रियते सर्वतन्त्रसिद्धान्तस्यासाध्यत्वात् इतरस्य च प्र-

तितन्त्रादेरवस्थायां साध्यत्वादिति । उदाहरणम् ब्राह्मणान् भोजयेति अशेषब्राह्मणभोजनस्याशक्यत्वात् सामर्थ्या- इति । यदि सामर्थ्यमास्थीयते समस्तस्यानभिधानं प्रतिज्ञेत्येतदपि न कर्त्तव्यम् प्रतिज्ञा प्रतिज्ञेति वक्तव्यम् र्थतो नियमो गम्यत इति मावोचः किन्नो बाध्य- कथं न बाध्यते यदभ्युपगतं तन्निवर्तते तन्निर्देशः प्रा- जिज्ञासादिविशेषणाद्वा न प्रसङ्गः साध्यनिर्देशः प्रा- जिज्ञासादिभिः प्रकरणोत्थापनावयवैर्विशेषितमिदं साध्यनिर्देशः प्रतिज्ञेति । यस्मिन्नर्थे जिज्ञासादयः सोऽर्थः इति तस्य निर्देशः प्रतिज्ञेति । तथा च हेतुदृष्टान्तयोः प्रसङ्गः । अर्हत्यर्थे वा कृत्याभिधानं—साध्यनिर्देशः प्रा- सर्थे कृत्यः साधनमर्हतीति साध्यः तस्य निर्देशः प्रतिज्ञा। हेतुदृष्टान्तौ साधनार्हावतो न प्रसङ्गः । कर्मकरणयोर्द्धर्मः अन्यः कर्मधर्मोऽन्यश्च करणधर्म इति, "कर्तुरीप्सिततमं कर्मधर्मः साधकतमं करणमिति करणधर्मः । न धर्म इतरधर्मो भवितुमर्हतीति। कर्मनिर्देशश्चायं साध्यनिर्देशः ज्ञेति करणनिर्देशश्चाक्षुषत्वादिति अतोऽपि न प्रसङ्गः । सिद्धासिद्धभेदाद्वा—अन्यत् साध्यमन्यत् सिद्धमन्यच्चासिद्धं साध्यमन्यतरपक्षासिद्धमन्यतरं प्रति कर्मतया यदुपादीयते भयपक्षासम्प्रतिपन्नमसिद्धम् । उभयपक्षसम्प्रतिपन्नं सिद्धं तेन यथा सिद्धमित्युक्ते न साध्ये नासिद्धे च तथा साध्यमित्युक्ते नासिद्धे सिद्धे च प्रसङ्गः । अथाप्य- देश्यते सर्वे ऽर्थाः सिद्धा अपि प्रतिज्ञात्वेन देशनीया न्ति । अथवा साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञावयवयो योऽर्थः स साध्यः—यः प्रतिज्ञादीनामवयवानां विषयो

प्रसिद्धधर्मविशिष्टः स धर्मान्तराधिकरणत्वेन साध्यते तथा च हेतुदृष्टान्तयोः कः प्रसङ्गः ।

न चेदयं प्रसङ्गोऽस्ति तस्मादिष्टग्रहणमनर्थकं—साध्यनिर्देशः प्रतिज्ञेति किल साध्यस्येष्टग्रहणेनाविशेषितत्वात् । साध्ययोर्हेतुदृष्टान्तयोः प्रसङ्ग इति मन्यमानैः कैश्चिदन्यथा पक्षलक्षणानि क्रियन्ते तद्यथा पक्षो यः साधयितुमिष्ट इति । अत्रेष्टग्रहणं तावदनर्थकं साध्यपदेन हेतुदृष्टान्ताभासोक्तेर्निराकृतत्वात् तन्निराकरणार्थमिष्टग्रहणमित्ययुक्तम् । कर्मग्रहणाच्चात्राप्तमेतदिष्टमीप्सितमिति चानर्थान्तरम् । अथाप्यनिष्टपक्षव्युदासार्थमिष्टग्रहणं क्रियते अर्थतः किलास्य नेष्टं भवति यत् स्ववचनादिना विरुध्यत इति, यथाऽवाचकाः शब्दा इति, अत्रावाचकत्वं च शब्दानां प्रतिज्ञायते शब्दा एवार्थप्रत्यायनायोच्चार्यन्त इति व्याहतम् । अनुष्णोऽग्निरिति प्रत्यक्षविरोधः । अश्रावणः शब्द इति प्रत्यक्षविरोधं केचिद्वर्णयन्ति । तदयुक्तम् । इन्द्रियवृत्तीनामतीन्द्रियत्वात्—इन्द्रियवृत्तयोऽतीन्द्रिया इदमनेनेन्द्रियेण गृह्यते नेदमनेनेति न कस्यचित् प्रत्यक्षमस्ति किन्तु तद्भावाभावानुविधानात् । रूपादिज्ञानैरिन्द्रियवृत्तयोऽनुमीयन्ते तस्मान्नेदमुदाहरणम् । उदाहरणन्त्वनुष्णोऽग्निरिति युक्तम् । आगमविरुद्धमपि वैशेषिकस्य नित्यः शब्द इति यथा । इदमपि नागमविरुद्धमिति पश्यामः । न हि वैशेषिकेण शब्दानित्यत्वमागमतः प्रतिपन्नम्, अपि त्वनुमानात् कारणतोविकारात् इत्येवमादेः, एतदप्यनुमानविरुद्धमेव । अथ सूत्रकारवचनात् प्रतिपन्नं इत्यागमविरोधः ? ननु च नित्यो घट इत्ययमप्यागमविरोधः प्राप्तः तस्माद् ब्राह्मणेन सुरा पेयेत्यागमविरोधः प्रसिद्धिविरुद्धं तु न बुद्ध्या-

महे (१) कोऽयं प्रसिद्धिविरोध इति? प्रसिद्धिः प्रत्यक्षादीनां प्रमाणानामन्यतमेनार्थप्रतिपत्तिः यथा अचन्द्रः शशीति। पूर्वप्रमाणविरोध एवान्तर्भवतीति न प्रसिद्धिविरोधस्य पृथक् प्रयोजनं पश्यामः। शक्यं तु प्रतिपत्तुम् सर्व प्रसिद्धिविरोध इति। एतदर्थनिराकरणार्थमिष्टग्रहणं ...

एतच्च सर्वं न युक्तमिति पश्यामः। कथं? स्वार्था... दिदोषाणां प्रतिज्ञादोषत्वेनाभ्युपगमात् सर्व एते(२) ... पवादादिदोषाः प्रतिज्ञादोषत्वेन सम्भवन्ति, न पक्षदोषाः ... कथमिति? अर्थस्य तादवस्थ्यात्—यथाभूतोऽर्थोऽभिधी... तथाभूत एवानभिधीयमान इति। वचनमपि तर्ह्येवमेवेति ... वचनेऽप्येते दोषा माभूवन्। सत्यममी नार्थदोषाः, न ... दोषाः, किन्तु पुरुषदोषाः, ये हि कर्तृदोषास्ते क्रिया... उद्भाव्यन्ते इति क्रियायां कर्तृदोषमुपचर्य दुष्टा क्रियेत्... एवं वक्तृदोषान् वचने उपचर्य दुष्टं वचनमित्युच्यते। ... स्तु नार्थे दोषो न वचन(३) इति। अर्थस्य स्वक्रियासा... सर्वोऽर्थः स्वस्यां स्वस्यां क्रियायां समर्थः स तु सां... व्यतिरेकेण क्रियान्तरे विनियुज्यमानः कर्तुरेवा... प्रकाशयति। एवं वचनमपि स्वस्मिन्नर्थे समर्थं विषय... तु प्रयुज्यमानं वक्तुः संमोहं प्रकटयति।

प्रतिज्ञायाः पक्षविषयत्वात् प्रतिज्ञादोषाः पक्षदोषा इ... न्ते। नैतद्युक्तम् हेत्वादिदोषाणामपि पक्षदोषत्वप्रसङ्गात्। ए... हेत्वादयोऽपि पक्षविषया इति कृत्वा हेत्वादिदोषा अपि ... दोषा भवन्तु ततश्च दूषणं पक्षदोषा इति वक्तव्यं न ...

(१) प्रमाणविरोधाद्भेदेन ता० टी०। (२) सर्वत्र ते- पा० ...
(३) वस्तुतस्तु पक्षदोषो नार्थे न वचन इति २ पु० पा...

दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानीति(१) । अथ वाच्यवाचकभावेन नियमो भविष्यतीति न साध्यसाधनभावेनेति ? नैतद् युक्तम्, प्रमाणाभावादिति साधनविषयत्वेनावतिष्ठते पक्षो वचनविषयत्वेन च, तत्र वाच्यवाचकभावनियमाद्वचनदोषाः पक्षे भवन्तु, माभूवन् साध्यसाधकभावात् । साधनदोषाः पक्षदोषा इति न प्रमाणमस्ति । वचनदोषाश्च पक्ष उपचर्यन्ते । न हि सम्भवे सत्युपचारो लभ्यते । तद्यथा मञ्चाः क्रोशन्तीति क्रोशनक्रियाया मञ्चेऽसम्भवात् लौकिकप्रयुक्तवाक्याव्याख्यानं कुर्वता मञ्चस्थाः पुरुषा इति स्थानिषु पुरुषेषु(२) मञ्चशब्दमारोप्य प्रमाणासम्भवेनोपचारः क्रियते मञ्चाः क्रोशन्तीति । न पुनः प्रतिज्ञादिदोषाः प्रतिज्ञायां न सम्भवन्ति यतस्तत्रासम्भवन्तोऽवश्यमन्वाख्येयतया व्यवस्थिताः पक्षे उपचर्येरन्निति । आकस्मिकं च मुख्यार्थव्यतिक्रमं कुर्वाणेन यदुक्तं नैयायिकहेतुप्रतिषेधेनाऽऽकस्मिको मुख्यार्थव्यतिक्रमो लभ्यते इति, तद्याहन्येन । अथेष्टग्रहणेन लौकिकोर्थोऽभिधीयते इष्टमाभिप्रेतमिष्टमपि मे मतमिति । अयमप्यर्थः साधनादेव गम्यते न हि कश्चिदनिष्टं साधयति । योऽप्यनिष्टभयात् साधयति तस्याप्यनिष्टनिवृत्तिरिष्टेति नानिष्टं साधयति तस्मादिष्टग्रहणमनर्थकम् । एवं विचारणायामिष्टोऽर्थः पक्ष इत्यत्रापीष्टग्रहणमनर्थकम् (३) । का चेयं विचारणा ? यदि साधनदूषणप्रयोगः तत्रानेकार्थसन्निपाते न ज्ञायते कथमिष्टमिति ? किं साध्यत्वेन, साधनत्वेन, दूषणत्वेन, दूष्यत्वेन, वेति । अथ संशयो विचारणा? तद्यथा आत्मनोऽस्तित्वनास्तित्वविचारणायामिति ? आत्मनोऽस्तित्वनास्तित्व-

(१) उद्भाव्यमानानि—पा० १ पु० ।
(२) ग्रहणं प्रत्युक्तमिति २ पु० पा० ।

संशय इति यावदुक्तं भवति तावदिदमुक्तं भवति अस्तित्वनास्तित्वविचारणायामिति संशयो ( विचारणापदस्यार्थः न विचारणा संशयपदस्य । ) विचारणा हि नाम संशयोत्तरकालभाविनी साधनदूषणप्रयोगरूपा अन्यतराधिकरणपर्यवसाना सा न संशय इति । संशयः पुनरनवधारणात्मकः प्रत्यय इति । न च वादे संशयो भवति कस्मात् निश्चितत्वात् निश्चितौ हि वादं कुरुत इति । एतेन साध्यत्वेनेप्सितः पक्ष इति प्रत्युक्तम् । ईप्सितग्रहणस्यानिष्टनिराकरणार्थत्वात् विरुद्धार्थानिराकृत इति न वक्तव्यम् । यः साधयितुमिष्ट इत्यत्रेष्टग्रहणेनानिष्टपक्षनिराकरणमितीष्टग्रहणादनिष्टपक्षनिरास इत्युत्तरकारिकार्द्धं न कर्त्तव्यं(१) विरुद्धार्थानिराकृत इति । अथ विरुद्धार्थानिराकृत इत्यनिष्टाः पक्षदोषा निराक्रियन्त ? ईप्सितग्रहणं तर्हि व्यर्थम् अथोभयमीप्सितग्रहणं विरुद्धार्थानिराकृत इति च पक्षदोषाणां निराकर्तृ, यथाऽपि पक्षो यः साधयितुमिष्ट इत्यत्रापि विरुद्धार्थानिराकृत इति कर्त्तव्यम् । सर्वथैते पक्षलक्षणे क्रियमाणे एकस्य न्यूनत्वमेकस्याधिक्यं ख्यापयत इति । साध्यत्वेनेप्सित इति च स्वयङ्ग्रहणं न कर्त्तव्यम् । किङ्कारणम् ? कर्मणः कर्त्रपेक्षत्वात् यथा कर्त्ता वृक्षं छिनत्तीत्युक्ते स्वयमिति गम्यते न ह्यन्यस्य छेत्र्यमन्यश्छिनत्ति । एवं यस्य साध्यं स एव साधयितेति(२) स्वयमिति गम्यते । सोऽयं परस्याक्षराधिक्यदोषानविविच्य स्ववचनप्रयोगेषु

( ) एतदन्तर्गतो ग्रन्थो नास्ति । २ पु०

(१) न वक्तव्यमिति २ पु० पा० ।

(२) सिसाधयितेति-पा० २ पु० ।

इति । यदपि वादविधानटीकायां साधयतीति शब्दस्य स्वयं परेण च तुल्यत्वात् स्वयमिति विशेषणं, साधयतीति किलायं शब्दः प्रयोज्ये प्रयोक्तरि च तुल्यरूपो भवतीति । समम् । तुल्यरूप एष शब्दो न पुनः साधारणप्रयोगे प्रयोजनं पश्यामः । अत एवं वक्तव्यं—पक्षो यः साधयितुमिष्ट इति । तत्त्वभाक्तयोश्च तत्त्वसम्प्रतिपत्तेः प्रयोक्तर्यसम्प्रतिपत्तेः यद्यप्ययं तुल्यरूपः शब्दस्तथापि प्रयोज्य एव सम्भवति साधयतीति, न प्रयोक्तरि भाक्तत्वात्, प्रयोज्ये चाञ्जसत्वात् । तुमुनश्च समानकर्तृकेषु नियमात् साधयितुमिति तुमुनः प्रयोगोऽयम् स चायं समानकर्तृकेष्वेव दृष्टः । तद्यथा स्नातुं गच्छामीति । न पुनरनुन्मत्त एवं ब्रूयात् स्वयं स्नातुं यामीति तथेहापि । यद्यपि साधयतिशब्दस्तुल्यरूपस्तथापि तुमुना विशेषितत्वात् प्रयोक्तर्यनतिप्रसङ्गः । यदपि स्वयं शब्देन(१) शास्त्रानपेक्षमभ्युपगमं दर्शयतीति, अत्रोक्तम् । किमुक्तम् ? परावज्ञानस्यायुक्तत्वादित्येवमादि । किं पुनः शास्त्रं यदनपेक्षमभ्युपगमं दर्शयति ? ननु शास्त्रं प्रत्यक्षागमाभ्यामविरुद्धं आगमस्तदनपेक्षमभ्युपगमं दर्शयतीति ब्रुवताऽप्रमाणकमर्थमभ्युपैतीत्युक्तम् । यश्चाप्रमाणकोऽभ्युपगमो नासावभ्युपगन्तुं स्वस्थात्मना(२) युक्तः नापि प्रतिपादयितुं युक्त इति । यदपि वादविधौ साध्याभिधानं प्रतिज्ञेति प्रतिज्ञालक्षणमुक्तं तदप्युभयथा दोषान्न युक्तम् । कथमिति । यदि तावत् पूर्वप्रकृतपक्षमपेक्षमाणेनेदमुच्यते साध्याभिधानं प्रतिज्ञेति ? तदा साध्यग्रहणानर्थक्यम् । प्रकृतः पक्षस्तच्छब्देनाभिसम्भन्त्स्यत इति

(१) स्वयं शब्देन–इति क्वचित् ।
(२) सुस्थात्मना—पा० १ पु० ।

तदभिधानं प्रतिज्ञेति वक्तव्यम् । अथ पक्षानपेक्षं स्व... तल्लक्षणं तथापि यो नैयायिकप्रतिज्ञायां दोष उक्तः ... प्रसक्तः यस्तु तत्र भवता परीहारः(१) क्रियते ... स एव परीहारो भविष्यतीति न वक्तव्यम् । मयान... मात् भवता चाभ्युपगतत्वात् यथा नाम कश्चित्वं ... माता तव*बन्धकी(२) स्त्रीत्वादिति स तस्योत्तरं ब्रूया... बन्धकीत्वे स्त्रीत्वं हेतुः किन्तु स्वपुरुषव्यतिरेकेण पुं... रसम्बन्ध इति । स्त्रीत्वाद्बन्धकीत्वं ब्रुवाणस्य मातुर्बन्ध... परिहार्यम् । अथ परपुरुषसम्बन्धं हेतुमभ्युपेयात् ... न्धकीत्वं व्याहतमिति तथा । भवतोऽपि व्याघातः ... हेतुदृष्टान्तयोः निर्देशं प्रतिज्ञा प्राप्नोतीति तस्मादपेत... पिदं वाक्यं साध्यनिर्देशः प्रतिज्ञेति ॥

उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः ॥ ३४ ॥

हेतोरवसरप्राप्तस्य लक्षणापदेशद्वारेणोदाहरणसाधर्म्य... सूत्रम् । उदाहरणेन साधर्म्यमुदाहरणसाधर्म्यम् । ... नरुदाहरणं वक्ष्यमाणकं तेन साधर्म्यं समानधर्मता यो ... साध्ये भवति तथाभूत एवोदाहरणेऽपीति न पुनः स ए... न्यधर्मस्यान्यत्रावृत्तेः—न ह्यन्यस्य धर्मो ऽन्यत्र वर्तते ... तत्तुल्यः स एवेत्युच्यते इति । यदि पुनः साधर्म्य... स्यैतावन्मात्रमुच्येत भवत्येवं विवक्षितार्थसिद्धिरनिष्टार्थ... न स्यात् साधर्म्यमात्रं हेतुरित्यतोऽनिष्टप्रतिषेधार्थमुद... साधर्म्यग्रहणम् । उदाहरणसाधर्म्यग्रहणादनुदाहरणसाधर्म्य...

---

(१) 'परिहार'शब्दस्य स्थाने तालपत्रपुस्तके सर्वत्र ... हार इति पाठः । * तवस्थाने मे इति २ पु०पा० ।

(२) बन्धकी पुंश्चली ।

न्निराकृतं भवति । अवधारणेन वा निराक्रियते उदाहरणेनैव साधर्म्यं न पुनरनुदाहरणेनापि,साधर्म्यमेव(१) न पुनर्वैधर्म्यमपीति । कस्य पुनरुदाहरणेन साधर्म्यं ? कस्यान्यस्य पुनः स्यात् साध्यस्य प्रकृतत्वात् प्रत्यासत्तेश्च—प्रकृतं प्रत्यासन्नं च साध्यं तस्मादुदाहरणसाधर्म्यं साध्यस्य । अत्रापि च साध्येन साधर्म्यमिति साधर्म्यमेवेत्यवधार्यते । किं पुनरनेनावधारणेन लभ्यते ? साध्यैकदेशवृत्तिरहेतुरिति लभ्यते । सोऽयं हेतुः साध्योदाहरणाभ्यां प्रतिसंहितः । किं पुनरस्य प्रतिसन्धानं ? साध्ये व्यापकत्वम् उदाहरणे चासम्भवः । एवं द्विलक्षणस्त्रिलक्षणश्च हेतुर्लभ्यते उदाहरणेनैव साधर्म्यमित्येवं ब्रुवताऽनभ्युपगतविपक्षस्याप्युदाहरणेनैव साधर्म्यमिति द्विलक्षणोऽपि हेतुर्भवतीत्युक्तम् । यदा पुनर्विपक्षमभ्युपैति तदाप्युदाहरणेनैव साधर्म्यं नानुदाहरणेनेति त्रिलक्षणो हेतुरित्युक्तं भवति । तदेवं द्वावप्यन्वयव्यतिरेकिणौ यथा वैशेषिकस्यानित्यः शब्दः कृतकत्वात् सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षविषयत्वाद्वेति । द्वावन्वयिनौ यथा सर्वानित्यतावादिनः अनित्यः शब्दः प्रमेयत्वात् अमूर्तत्वाच्च । तदेवमन्वयव्यतिरेकिभेदद्वावन्वयभेदत्वांश्चतुःप्रकारो हेतुरित्युक्तं भवति । तदेवं हेतुस्वरूपावधारणाद्धेत्वाभासा निराकृता भवन्ति । तत्रोदाहरणेनैव साधर्म्यमित्यनेन विपर्ययहेतोरनैकान्तिकस्य च निराकरणम् । साधर्म्यमेवोदाहरणेनेत्यनेनावधारणेन साध्यावृत्तिः साध्यैकदेशवृत्तिश्च निराकृत इति । तत्र तावद्विपर्ययहेतुरश्वो विषाणित्वात् गौर्विषाणित्वादित्यनैकान्तिकः साध्यावृत्तिश्चाक्षुषत्वादनित्यः शब्द इति । साध्यैकदेशावृत्तिरनित्याः परमाणवो

(१) साधर्म्यमिवेति क्वचित् ।

गन्धवत्त्वादिति। स्वरूपतस्तर्ह्यनैकान्तिकादिग्रहणं न ...
यत्नेन हेतुलक्षणेन एवंभाव्यमानेनार्थादनैकान्तिका...
राक्रियन्ते नन्वनैकान्तिकः सव्यभिचार इत्येवमा...
नारम्भः। नातिप्रसक्तस्य नियमार्थत्वात् अनेकधा ...
भिन्ना इति तेषां नियमज्ञापनार्थमनैकान्तिकादिग्रहण...

उदाहरणसाधर्म्याच्च किमन्यत्साध्यसाधनमिसेक...
दाहरणसाधर्म्यव्यतिरेकेण साध्यसाधनमस्तीति एवं सू...
व्यं "उदाहरणसाधर्म्यं हेतु"रिति। अथ पुनः ...
साधनशब्दोपादानमुदाहरणसाधर्म्यविशेषणार्थमेवमपि ...
पदेशोऽनर्थक इति। न हि भवति नीलादुत्पलमिति ...
तु पञ्चम्यपदेशानर्थक्यमन्यथा वर्णयन्ति। अर्थान्त...
त्वादिहानर्थक इति। अर्थान्तरे किल पञ्चमी ...
ग्रामादिति। न पुनरिहोदाहरणसाधर्म्यव्यतिरेकेण ...
स्य साधनमस्तीत्यतः पञ्चम्यपदेशोऽनर्थक इति।
साधनविशिष्टे चोदाहरणे साधर्म्यहेतुत्वेन ब्रुवाणोनाभि...
तुरित्युक्तं भवति। तथा च साध्यनिर्देशः प्रतिज्ञेति ...
भवति। न चाभिधानाभिधेयात्मकः समुदायो दृष्ट ...
भयेषामवयवत्वम्। तत्रत्येष दोषो न परिहारान्तरं प्र...
तेनैवापाकृतत्वात् उदाहरणसाधर्म्यात् साध्यसाधनव...
रित्येवं व्याचक्षाणेन समस्त एव दोषोऽपाकृतो भ...
अतो न परीहारान्तरं प्रयोजयति। साधर्म्यस्य ...
व्यभिचारित्वात् विशेषणयोगो न तद्वचनस्याप्रका...
यत्तत्प्रकारवत्तद्विशेष्यते साधर्म्यं चैतदस्ति न च ...
वचसः कारकत्वं न भवतीति न बुद्ध्यामहे यथैवार्थ...
रत्वात् तथा वचनमपीति। अर्थस्तावत् कथं प्रका...

उभयथाभावात्—यस्मादयमर्थ उभयथा भवति नित्योऽनित्यः मूर्तोऽमूर्तश्च । वचनमपि तद्वदुभयथा भवतीति तुल्यं नित्यानित्यमूर्ताऽमूर्तशब्दाभिधेयमिति । दृष्टश्च शब्दे विशेषणयोगः यथा किमयमाह गौरित्ययमाह इतिपरतया शब्दः शब्दान्तराद्व्यवच्छिद्यते । स्वयं वचनविशेषकाणि बहूनि वाक्यानि प्रयुक्तानि । तद्यथा स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति । अथ वचनं नैवंविधमिति(१) सिद्ध्यासिद्ध्यर्थं वचनं वाद इत्येवमादि व्याहतम् । सोऽयं सूक्ष्मेक्षिकया परस्य दोषानभिदधानो लोकादप्यपभ्रष्ट इति । यदप्यर्थान्तरे दृष्टत्वादिसनर्थकः पञ्चम्यपदेश इति ? एवं ब्रुवाणः स्वसिद्धान्तं बाधते, न हि भवन्तः सेनावनादीन्यर्थान्तरभूतानि प्रतिपद्यन्ते । अथ च पञ्चम्यपदेशो भवति वनादयं वृक्ष आनीतः सेनातोऽश्व इति । दृष्टश्च तन्त्रान्तरे पञ्चम्यपदेशोऽनर्थान्तरे सन्धिविग्रहाभ्यां षाड्गुण्यं सम्पद्यते इति । अनभ्युपगतार्थान्तरविपक्षस्य(२) च हेतुर्विपक्षाद्विशेष इति पञ्चम्या अर्थान्तरवाचकत्वं कुतः । यदप्युदाहरणसाधर्म्यस्येति वक्तव्यं नोदाहरणसाधर्म्यादिति । तदपि न । विवक्षातः कारकशब्दप्रयोगात्—यदा साधर्म्यमभिधीयमानतया विवक्षितं भवति उदाहरणसाधर्म्यस्येति युक्तम् । यदा तूदाहरणसाधर्म्यस्य निमित्तभावो वचनेऽपि विवक्षितस्तदोदाहरणसाधर्म्यादिति निमित्तपञ्चमी युक्ता । कथं पुनरुदाहरणसाधर्म्यस्य निमित्तभावः ? सति भावात् यस्मादुदाहरणसाधर्म्यं बुद्ध्वा विवक्षाप्रयत्नवायूदीरणताल्वाद्यभिघातादयः शब्दस्य निमित्तं भवन्ति अतः पारम्पर्येणोदाहरणसाधर्म्यमपि निमित्तमिति । तस्मात् पञ्चम्यभिधानमेव ज्यायः ।

(१) नैवंविध्यम्—पा० २ पु० । (२) विशेषस्येति ३ पु० पा० ।

उदाहरणमनित्यः शब्द उत्पत्तिधर्मकत्वात् उत्पत्तिध- नित्यं स्थाल्यादि दृष्टमिति । किं पुनरनित्यं नाम ? यस्यानि तदनित्यम् । अथानित्यत्वं किम् ? उभयान्तावच्छिन्नवस्तुस- म्बन्धः सत्ता वा तद्विशेषणा । अथोत्पत्तिधर्मकं किम् ? उत्पत्ति- र्यस्य स उत्पत्तिधर्मा उत्पत्तिधर्मैवोत्पत्तिधर्मकः । का पुनरुत्प- त्तिः ? असद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेधः– सद्विशेषणं सद्भवति तत्पूर्वं नासीत् पश्चाद्भवतीति म्यते तस्यात्यन्तमभावोऽत्यन्तञ्च भाव इति प्रतिषेधः स उत्पत्तिशब्दार्थः सत्ता वैवंविशेषणा । वाक्यार्थ- ज्ञानाच्च पदार्थोऽभ्यनुज्ञातो भवति यो वाक्यस्यार्थो भवतीति स पदस्यार्थ उत्पद्यत इति । सोत्पत्तिधर्मो स भवत्युत्पत्तिधर्मक इति ॥

## तथा वैधर्म्यात् ॥ ३५ ॥

किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते । किं तर्हि ? वैधर्म्यात्" । अत्राप्युदाहरणवैधर्म्यादित्युदाहरणेनैव नानुदाहरणेनेति, वैधर्म्यमेवो(१)दाहरणेन न साधर्म्यम् उदाहरणमनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्ति- नित्यं दृष्टं आत्मादिद्रव्यमिति भाष्यम् । एतत्तु (२) मञ्जसमिति पश्यामः प्रयोगमात्रभेदात् प्रयोगमात्रं द्यते नार्थ इति । न च प्रयोगमात्रभेदाद्वस्त्वन्तरं तुमर्हतीति । उदाहरणमात्रभेदाच्च—उदाहरणमात्रं केवलं आत्मा घट इति । यदि चोदाहरणभेदाद्भेदो "तथा वैधर्म्या"दिति न पठितव्यम् । किं कारणम्

(१) वैधर्म्यमिवेति क्वचित् ।

(२) एतच्चेति टीकानुसारेण युक्तम् ।

दाहरणभेदादेव भेदो गम्यते । उदाहरणसूत्रं च भेदकमस्ति "तद्विपर्ययाद्वा विपरीत"मिति । तस्मान्नेदमुदाहरणं न्याय्यमिति । उदाहरणं तु नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गादिति । यदुभयपक्षसम्प्रतिपन्नमप्राणादिमत् तत्सर्वं निरात्मकं दृष्टम् । न चेदमप्राणादिमद्भवति तस्मान्नेदं निरात्मकमिति । सोऽयमवीतः परपक्षप्रतिषेधार्थ एव भवति । तावेतौ वीतावीतहेतू लक्षणाभ्यां पृथगभिहिताविति । तत्र स्वरूपेणार्थपरिच्छेदकत्वं वीतधर्मः अवीतः पुनः परपक्षप्रतिषेधेनैव प्रवर्तत इति । एकस्य विधीयमानोऽर्थ इतरस्य प्रतिषिध्यमानः । कथं पुनरयमवीतोऽर्थपरिच्छेदक इति । अथ योऽभ्यनुज्ञातो ऽर्थपरिच्छेदकः स कथम् ? वीतोऽन्वयादिति चेत् ? वीतो हेतुरन्वयेन प्रतिपादयति । अथ प्रमेयत्वं कस्मान्न हेतुः यद्यन्वयस्यैतत् सामर्थ्यम् ? व्यभिचारात् प्रमेयत्वं न हेतुः ? न तर्ह्यन्वयः प्रतिपादकः अपि त्वव्यभिचारः । यदि चाव्यभिचाराद्धेतुरर्थं प्रतिपादयति तदा अदेश्यमेतत् कथमवीतः प्रतिपादक इति अवीतस्यापि व्यतिरेकाव्यभिचारित्वात् प्रतिपादकत्वमिति । कथं ? यावदप्राणादिमत् तत् सर्वं निरात्मकं दृष्टमिति अप्राणादिमत्त्वं च जीवच्छरीरान्निवर्तते तस्मात्तदव्यभिचारि निरात्मकत्वमपि निवर्तयतीति । अथ पुनरप्राणादिमत्त्वनिवृत्तिरेव प्रतिपाद्यते न पुनर्निरात्मकत्वस्य ? न युक्तमेवं भवितुम् । किं कारणम्? पक्ष एवं सति व्यभिचारो दर्शितः स्यात् पक्षव्यभिचारोपदर्शने सति शक्यं वक्तुम् । अन्वयिनि तु हेतौ शब्दे नित्यत्वमस्तु सति कृतकत्व इति । तस्माद्यथान्वयिनोऽन्वयसम्बन्धाव्यभिचारः प्रतिपादकः तथा व्यतिरेकिणोऽपि व्य-

तिरेकाव्यभिचार इति । एतेन यथा वीतहेतोरन्वयि
एकस्य धर्मस्य दर्शनादितरधर्मानुमानमेवमवीतहेतावपि
धर्मनिवृत्तिदर्शनादितरधर्मानिवृत्त्यनुमानमिति । सर्वात्मक
इति चेत । न । विकल्पानुपपत्तेः । यद्येकधर्मनिवृत्तिदर्श
रधर्मनिवृत्तिरनुमीयते तन्निवृत्त्या च सात्मकत्वं सिद्ध
मन्यसे एवं च सर्वात्मकं शरीरं प्राप्नोति । किङ्कारण
प्राणादिनिवृत्तेरडित्थादिनिवृत्तिप्रतिपादकत्वात नेदं
च्छरीरमप्राणादिमत्त्वप्रसङ्गादेवमडित्थादिप्रतिषेधोऽपि
इति । तच्च नैवं विकल्पानुपपत्तेः इदं तावत् भवा
न्व्याचष्टाम्––किमवधारितकार्यस्वभावः पदार्थो डि
वाच्यः आहो नेति । यद्यवधारितकार्यस्वभावः
मात्रमात्मा स इति । अथानवधारितकार्यस्वभावः
व्यावृत्तिरशक्या प्रतिपादयितुम् । व्यावृत्तिप्रधानं चे
तस्मादवीतहेतोरर्थमबुद्ध्वा सर्वात्मकता देश्यत इति ।

यदि तर्ह्यसाधारणो धर्मो हेतुर्नित्या पृथिवी गन्धवत्त्वादि
हेतवः प्राप्नुवन्ति । न । हेत्वर्थापरिज्ञानात्–सत्यमसाधार
धर्म्यहेतुः न पुनर्वैधर्म्यं व्यभिचारि गन्धवत्त्वं च
नित्यव्यभिचारि तस्मादन्वयिनो व्यतिरेकिणश्च नान्व
रेकौ हेतुभावनिमित्तम् किन्त्वन्वयव्यतिरेकयोरव्य
इति । यः पुनरसाधारणो धर्मः पक्ष एव केवलं
तत्तुल्यविपक्षौ न स्तः स कस्मान्न हेतुः यथा सर्वं नित्यं
त । सत्यमयमसाधारणो न तु व्यावृत्तः अव्यावृत्तेरहे
एतेन यः पक्षैकदेशवृत्तिरविद्यमानसपक्षविपक्षः स न
त्युक्तं भवति यथा सर्वं नित्यममूर्त्तत्वादिति । यः
देशे वर्तते अविद्यमानसपक्षो विपक्षाच्च निवर्तते यथा

पगतनित्यपक्षस्य नित्ये वाङ्मनसे श्रावणत्वादिति स क-
स्मान्न हेतुः ? अयमपि न हेतुः सूत्रार्थेनापोदितत्वात्—सूत्रा-
र्थस्तथा वैधर्म्यादिति । अत्र च वैधर्म्यमुदाहरणेनैव, वैधर्म्य-
मेव चोदाहरणेन, न पुनरिदं वैधर्म्यमेव तस्मान्न प्रसङ्गः ।
एवमनयोर्वीतावीतहेत्वोः पृथगर्थप्रतिपादकत्वस्याऽऽकुमारं प्रसिद्धेः
यदुक्तं वीतावीतौ न पृथक् प्रतिपत्तिहेतू इति तत्संमूढे-
नोक्तम् ।

हेतुर्विपक्षाद्विशेष इत्यन्ये—अन्ये त्वन्यथा लक्षणं व्या-
चक्षते हेतुर्विपक्षाद्विशेष इति । यदि पुनरेतावन्मात्रमुच्य-
ते हेतुर्विशेष इति ? किं स्यात्, विशेषमात्रं हेतुः स्यात् सा-
धर्म्यमात्रनिराकरणं च स्यात् साधर्म्यमात्रनिराकरणे विशेष-
मात्रपरिग्रहे च इष्टानिष्टसङ्ग्रह इति । अतोऽनिष्टहेतुनिराक्रियायै
विपक्षग्रहणम्(१) विपक्षाद्यो विशेषः स हेतुः । विपक्षाद्विशेषो हेतुरि-
त्येतावति चोच्यमाने विपक्षाद्विशेषमात्रस्य हेतुत्वं स चानेकभे-
दः तन्निवृत्त्यर्थं विपक्षादेवेत्यवधार्यते । अवधारणे चैतस्मिन् विप-
क्षैकदेशवृत्तिरेकोऽनुषज्यते गौर्विषाणित्वात् स हि विपक्षादेव
विशेष इति नायमनेनावधारणेन निराक्रियत इति तन्निराक्रि-
यायै द्वितीयमवधारणं विशेष एव च विपक्षान्न त्वयं वि-
शेष एव विपक्षैकदेशवृत्तित्वात् सामान्यमपि । तदेवमाभ्या-
मवधारणाभ्यामन्वयव्यतिरेकी त्रिलक्षणो हेतुर्लभ्यत इति ।

सत्यमेकस्त्रिलक्षणो हेतुर्लभ्यते समानपक्षैकदेशवृत्तिश्च एक-
स्त्रिलक्षण एव निराक्रियत इति । कथमिति । आद्ये-
नावधारणेन विपक्षादेव यो विशेषः स हेतुरिति ब्रुवता यस्तुल्यै-
कदेशवृत्तिः स निवर्तितो भवति । न ह्ययं विपक्षादेव विशेषः किन्तु

(१) विपक्षादवधारणमिति ३ पु० पा० ।

सपक्षैकदेशादपीति । विपक्षैकदेशवृत्तिप्रतिषेधात् सपक्ष विशेष एव स न हेतुरित्युक्तम्भवति यथाऽश्वोऽयं विषाणि पुनरयं प्रयत्नानन्तरीयकत्वादिर्विशेष एव न भवति पक्षैकदेशवृत्तित्वात्सामान्यमपीति । यद्येवं विपक्षाद्वि विशेषः स हेतुरित्येतदवधारणं बाधितं भवति । प्रयत्नानन्तरीयकत्वादिर्विपक्षादेव विशेषः किन्तु तत्तु शादपि । अथाश्रूयमाणेनार्थे(१)नावधारणे ऽर्थवती । तुल्यैकदेशवृत्तिवत् साध्यैकदेशवृत्तेरपि हेतुत्वप्रसङ्गः मर्थ्येन तत्तुल्यैकदेशवृत्तिर्लभ्यते तेनैव सामर्थ्येनानुपक्ष वृत्तिरपि हेतुः प्राप्तः । यथाऽनित्याः परमाणवो गन्धवत्त्वा ते एवेऽवधारणे यदि तावद्यथाश्रुते भवतस्तत इष्टः प्रयत्ना यकत्वादिर्न हेतुः । अथान्यथा श्रूयते अन्यथा प्रकल्प्य प्रेतार्थसिद्ध्यर्थं तथाप्यभिप्रेतप्राप्तिवदनिष्टोऽपि गन्धवत्त्व भ्यते इति उभयं च लक्षणदोषः अभिप्रेतहानिरनिष्टप्रा नैष दोषः वृत्तौ विशेषितत्वात्—अनिष्टस्य गन्धवत्त्वादेः स्यदोषः यस्मादवृत्तत्वादाह । यो धर्मः पक्षस्येति चाक्षुषत्वादिः पक्षासम्भवी निराक्रियते पक्षैकदेशवृत्तिस्तु न ह्यसौ पक्षधर्मो न भवति तथा विपक्षैकदेशवृत्तिर्न विप धर्म इति तस्मादन्यथा निराकरणे यत्नः कर्तव्य इति । व्योऽवधारणान्निवृत्तेः—अवधारणादेकदेशवृत्तिर्निवर्त्तिष्यते पुनरवधार्यते किं धर्म एव पक्षस्य उत पक्षस्यैव धर्म इति तावद्धर्म एव पक्षस्येति । किं पुनरस्यावधारणस्य सामर्थ्य मनेन सम्भवो ज्ञाप्यते, उतासम्भवो व्यावर्त्यते, उभयथा वधारणस्य सामर्थ्यमस्ति सम्भवज्ञप्तेरसम्भवनिवृत्तेश्चा

(१) अथाश्रूयमाणकेनार्थेन इति २ पु० पा० ।

मन्तरेणाप्यवगतेः । न चैकदेशवृत्तिर्निराक्रियत इति व्यर्थमवधारणम् । अथ पुनर्व्याप्तिरस्यावधारणस्यार्थः धर्म एव पक्षस्येति न पुनरधर्मोऽपि यः पुनः पक्षैकदेशवृत्तिरसावधर्मोऽपि । सत्यमनेनैकदेशवृत्तिर्निराक्रियत इति । एतस्मिन्नप्येकं सन्धित्सत इदमन्यद् प्रच्यवते । भवत्वेकदेशवृत्तेर्निराकरणं सपक्षे सिद्धे एतद्-पदं किमर्थमारभ्यत इति । कथं पुनरिदमनारभ्यं यस्माद् व्याप्त्यर्थेनावधारणेन चरितार्थत्वात् । धर्म एव पक्षस्येति पक्षो नियतो, धर्मोऽनियतः तस्यानियतस्य व्याप्त्यतिव्याप्तिभ्यां तत्तुल्यविपक्षगतिः तत्र विपक्षे नास्तीति प्रसक्तस्य प्रतिषेधो भवतु, सपक्षे सिद्ध इत्येतत्पदं माभूत् । अथ पुनरिदमवधारण(१)मन्यथा क्रियते पक्षस्यैवेति । एवमप्यनन्तरे द्वे अपि पदे सपक्षे सिद्धो विपक्षे नास्तीति च बाधिते भवतः । कथं ? सपक्षे सिद्ध इत्येतदवधारणार्थबाधितम् पक्षस्यैव धर्मः सपक्षे सिद्ध इति । न हि लोक एवं प्रकाराणि वाक्यानि प्रवर्तन्ते देवदत्तमेव भोजय यज्ञदत्तं च । उत्तरं तु पदं विपक्षे नास्तीति गम्यमानत्वादकार्यं । केन गम्यमानत्वादिति । अवधारणेन पक्षस्यैव धर्मः सामान्यस्येति गम्यत एव इति विपक्षे नास्तीत्येतन्न कर्तव्यमिति । न च पक्षैकदेशवृत्तिर्निराक्रियत इति यदर्थमवधारणं स एवार्थो हीयत इति । अथ पुनः सपक्षे सिद्ध इत्येतदपि पदमवधारणार्थमेवारभ्यते सपक्ष एव सिद्धः सिद्ध एव सपक्ष इति । किं पुनरस्मिन् पदेऽवधारणेन लभ्यते यदि सम्भवः सोऽनवधारितोऽपि गम्यते सपक्षे सिद्धः । अथ व्याप्तिः तज्जातीयस्यैकदेशवृत्तिरहेतुरिति प्राप्तम् । अथ सपक्ष एव सिद्ध इति तथापि पूर्वोत्तरे पदे व्याहते भवतः पक्षस्य धर्मो विपक्षे नास्तीति अवधारणार्थबाधितत्वात् पूर्वमनारभ्यं गम्यमानत्वादुत्तरमपि । अथ

(१) अवधारणाभ्यां—पा० २ पु० ।

विपक्षे नास्तीत्येतदप्यवधारणार्थमेवेति । अत्रापि ि
र्यते विपक्ष एव नास्तीति नास्त्येव विपक्ष इति । य
एव नास्ति तदा गौर्विषाणित्वादिति हेतुः प्राप्तः स
क्ष एव नास्तीति । अथ विपक्षे नास्त्येवेति न पुनर्मध्य
स्यानारभ्यः तत्र पूर्वपदं व्याप्त्यर्थं उत्तरपदं विपक्षैक
प्रतिषेधार्थम् । अथ सपक्षे सिद्ध इत्येतत्पदं किमर्थमारभ्य
यदि सम्भवार्थं व्याप्त्यर्थेनाद्यावधारणेन(१) सम्भवो
इति व्यर्थम् । तदेतस्मिन् लक्षणे सहवृत्त्या विचार्यमा
ष्टहेतूपनिपातो वा इष्टहेतुपरित्यागो वाभिमतग्रस्तहानिर्वे
हेतुर्विपक्षाद्विशेष इति च यदा सौत्रान्तिकपक्षमाश्रित्य
चार्यते तदा विपक्षासम्भवाद्धेतुर्विपक्षाद्विशेष इति
क्तव्यः न चासति विपक्षार्थं पश्याम इति । न चासति
प्रयोगः सम्भवति इति विपक्षे नास्तीति सप्तम्यर्थो
विपक्षासम्भवे सति पक्षतज्जातीयव्यापकत्वात् कृतक
शेषोऽर्थश्चिन्त्यः । कृतकत्वादिति (तदा)साधारणत्वात्
विशेष इति । तदेतल्लक्षणं स्वसिद्धान्तेनासङ्गतत्वादल
यदपि हेतुवार्त्तिकं ब्रुवाणेनोक्तम्(२) सप्तिकासम्भवे
धादेकद्विपदपर्युदासेन त्रिलक्षणो हेतुरिति । एतदप्ययुक्त
दलक्षणयुक्तयोर्हेतुत्वात्– तत्र किल सप्तिका सम्भवति
धर्मः समान एव सिद्धः विपक्ष एव नास्ति । प
समाने च सिद्धः पक्षस्य धर्मो विपक्षे नास्ति ।
च सिद्धः विपक्षे नास्ति, पक्षस्य धर्मः समाने च

(१) आद्येवधारणेनेति––पा० २ पु० ।
(२) हेतुवार्त्तिकं—पा० २ पु० । वार्त्तिकं कुर्वाणेनेति
भाष्ये गोनर्दीयस्त्वाहेतिवदित्यनुमीयते विस्तरस्तु भूमिका

पक्षे च नास्तीति । तदेवं सन्निकासम्भवे सति षट्प्रतिषेधमुक्त्वा यदयं त्रिपदपरिग्रहेण त्रिलक्षणस्य हेतुतां शास्ति तेनैकाद्विद्विपर्युदासं ज्ञापयतीति । तच्च नैवम् । द्विलक्षणयुक्तयोर्हेतुत्वादिति अनभ्युपगताऽनित्यपक्षस्य कृतकत्वादित्ययं द्वाभ्यां लक्षणाभ्यां युज्यते प्रयत्नानन्तरीयकत्वादिति चानयोर्हेतुभावो न स्यात् । यश्चायं व्यतिरेकी हेतुः नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गादित्येवमादिः स न हेतुः स्यात् द्विपदयोगादिति । तस्माद्धेतुर्विपक्षाद्विशेष इत्येतल्लक्षणं विचार्यमाणमनभिमतं वा हेतुमापादयति इष्टं वा बाधते ग्रन्थं वा निराकरोति शास्त्रं बाधत इति ।

"तत्र यः सन् सजातीये द्वेधा चासँस्तदत्यय" इति । अन्ययेन(१)—सन् सजातीये द्वेधा चासँस्तदत्यय इत्यसपक्षे नास्ति । एतावता च किल लक्षणेन त्रिलक्षणो हेतुर्लभ्यत इति । यथाश्रुति न लभ्यते । यदि तावदेतल्लक्षणं यथाश्रुति भवति पक्षे(२) विद्यत इति केनैतल्लभ्यते इति । ननु चोक्तं हेतुः तदाभासो वा प्रायः पक्षधर्म एव भवति । उक्तमेतन्न पुनरनेन पक्षधर्मो हेतुरिति लभ्यते, किं त्वपक्षधर्मो न हेतुः न हेत्वाभास इति । अथाप्यर्थतो लभ्येतापक्षधर्मो हेतुर्न हेतुर्न हेत्वाभास इत्ययं यदि वाक्यार्थो भवति अर्थाद् गम्यते हेतुर्हेत्वाभासश्च पक्षधर्म इति । सत्यमर्थात् पक्षधर्मो गम्यते न तु व्यापको नियतो लभ्यत इति । अपक्षधर्मनिवृत्तिमात्रत्वेन सम्भवमात्रं लभ्यते इति । तच्च द्वेधा व्यापकमव्यापकं च ।

(१) इत्यन्ये सन् इति– पा० २ पु० ।
(२) विपक्षे इति– पा० २ पु० ।

तत्राव्यापकोऽनिष्टो हेतुः प्राप्तः । न प्राप्तः पक्षधर्म-
त्वाभिधानात् यः पक्षस्य धर्म एव स हेतुः प्राप्तः । न
पक्षधर्म एव एकदेशवृत्तित्वादिति । नावधारणस्यान्यार्थ-
अन्यार्थमवधारणं भवन्तः कल्पयन्ति । किमर्थं ? हेतुहेतु-
नियमज्ञापनार्थम् । तदवधारणमन्यार्थं सत् कथमव्याप्ति-
वर्तयिष्यति । अथोभयकारि भवत्यव्यापकनिवृत्त्यर्थं हेतु-
सनियमज्ञापनार्थं च तथापि सन्सजातीये द्वेधा चेत्य-
यम् । कथम्, व्याप्त्यर्थेनावधारणेन पक्षोऽपि नियमे-
नियत इति । अनियतस्य व्याप्त्यव्याप्तिभ्यां धर्म-
राशी शिष्यमाणौ सजातीयस्तदत्ययश्च तत्रातिप्रसक्तो-
त्सय इति युक्तम् । सन् सजातीय इति किमर्थम् । यदि ग-
तन्न । अनियमात्—व्याप्त्यव्याप्त्योः सम्भवो गम्य-
किमनेन सन् सजातीय इति । द्वेधा चेति सर्वथा
क्तव्यम् । इदं तावत् गम्यमानत्वात् सन् सजातीय
न कर्तव्यम् । सच्छब्देन व्याप्त्यव्याप्त्योः साधर्म्या-
धानात् द्वेधा चेति प्रमत्तवाक्यम् । अथ मन्येत
सजातीय इत्यवधारणार्थमारभ्यत इति ? अवधारणार्थ
आरम्भः अवधारणं न युक्तम् । कथमिति ? यदि
देवमवधार्यते सन्नेव सजातीय इति ? प्रयत्नानन्तरीयकत्वा-
हेतुः यस्मात् प्रयत्नानन्तरीयकत्वादिः सन्नसन्नपि
चेति एतदवधारणार्थबाधितम् । न हि भवति ब्रा-
भोजय क्षत्रियं चेति । अथ सजातीय एव सन्नित-
तथापि पूर्वोत्तरे बाधिते भवतः । कथम् । एकमवधा-
बाधितं एकं गम्यमानत्वात् । अथ पुनर्द्वेधा चे-
णार्थम् ? अत्रापि किमवधार्यते किं सजातीय एव

द्विधैव सजातीय इति । यदि तावत् सजातीय एव द्विधा नान्यत्र पक्षे(१) तदत्यये तद्द्विधेत्युक्तं भवति । यद्येवं सन् सजातीय इति न कर्तव्यम्—प्राप्त्यर्थेनावधारणेनाऽऽद्यपदे सजातीये सम्भवस्योक्तत्वात् । द्विधा चेत्यन्यपदं द्विधा निवृत्तिपरत्वात् द्विधा चेत्यभिधानात् सम्भवो गम्यत इति सन् सजातीय इति सर्वथा न वक्तव्यम् । सजातीय एव द्विधा चेत्यनेनैवावधारणेन पक्षवृत्तिर्लभ्यते इति धर्म एव पक्षस्येति व्याप्त्यर्थमवधारणमयुक्तम् । अथमाभूत् सर्वपदावधारणव्याघात इति नावधारणं तथापि मध्यमे द्वे पदे आपि न कर्तव्ये । सोऽयं गृहप्रवेशाक्षितारकानिर्गमन्याय इति । अथ पुनर्द्विधैव सजातीय इति । तथापि कृतकत्वादिर्न हेतुः न ह्यसौ सजातीये द्विधैव । त्रिलक्षणं च हेतुं ब्रुवाणेन स्वसिद्धान्तोपात्तयोर्द्विपदयुक्तयोरहेतुत्वमिति प्राप्तम् । व्यतिरेकी च न हेतुरिति प्राप्तम् । नैव हेतुरिति चेत् कुतस्तस्य हेतुत्वे यत्न इत्यनुत्तरम् । अथ पुनरवधारणानि न क्रियन्ते तथापि पक्षैकदेशवृत्तिरनैकान्तिकश्चानुपक्त इति ।

एतेन ग्राह्यधर्मस्तदंशेन व्याप्तोहेतुरिति प्रत्युक्तम् । अनेनाव्यापकादिर्लभ्यत इति उक्तोत्तरमेतदपीति । असँस्तदत्यय इत्येतदपि विपक्षे नास्तीत्यनेन समानमिति ।

तादृगविनाभाविधर्मोपदर्शनं हेतुरित्यपरे—तादृशा विना न भवतीत्यनेन किल द्वयं लभ्यते विपक्षासत्त्वं तादृशसत्त्वं च उपदर्शनग्रहणेन किल पक्षे सत्त्वं लभ्यत इत्येवं त्रिलक्षणभाविभावितात्मा पक्षो लभ्यत इति । यत्तावत्तादृगविनाभाविग्रहणाद्विपक्षेऽसत्त्वं तादृक्सत्त्वं च लभ्यत इति तत् न युक्तम् ।

(१) न इत्यधिकम् क्वचित् ।

तादृशाद्विना न भवतीति एतस्माद्विपक्षेऽसत्त्वं गम्येत
तु सम्भव इत्येतदेव कुतः न ह्ययं नियमो यो विपक्षे
सोऽवश्यं तज्जातीयेऽस्तीति । एवं च श्रावणत्वाद्य
प्राप्तः श्रावणत्वाद्यपि तादृशाद्विना न भवतीति । प्र
वत्तादृगविनाभाविग्रहणे तत्तज्जातीये सम्भवः स पुनः
सम्भवतीत्येतत् कुतः । ननूपदर्शनग्रहणादेतल्लभ्यते ? न
उपदर्शनग्रहणस्याभिधानार्थत्वात् उपदर्शनग्रहणमभिधा
उपदर्श्यतेऽनेनेति न पुनरस्यैतत् सामर्थ्यमस्ति पक्षे
चेति । क्व पुनरन्यत्र स्याद्यत्र सम्भवः क्व चास्य
तज्जातीये । तस्मादेतदुक्तम्भवति तज्जातीयाविनाभावि
ज्जातीय एवाभिधानहेतुरिति । एवं च ते चाक्षुषत्वं
वति । न हि चाक्षुषत्वमनित्यत्वेन विनाभावि । उपेत्य
तादृगविनाभाविनो धर्मस्य पक्ष उपदर्शनमिति ।
पक्षैकदेशवृत्तिं केन निराकरोषि । उपदर्शनग्रहणेनेति स
तस्य सम्भवमात्रज्ञापनार्थत्वात् । अथ मन्येत उपदर्श
व्याप्तिर्लभ्यत इति न युक्तम् उपदर्शनग्रहणस्य सम्भव
पनार्थत्वात् उपदर्शनग्रहणेन सम्भवमात्रं ज्ञाप्यते
पुनर्व्यापक इति न युक्तम् । अथात्रापि केनचिन्मार्गे
रणानि क्रियेरन् तान्यव्यापकहेतुनिराकरणेन
पूर्ववत् प्रसङ्गः । यच्चेदमुदाहरणमेतस्मिन् प्रयत्नानन्त
त्वादिरनित्यत्वस्याग्नेर्धूम इति । तत्र धूमस्तावदग्नेरर्था
इत्युक्तम् । प्रयत्नानन्तरीयकत्वमप्यहेतुः कुतः प्रय
रीयकत्वस्य पक्षावृत्तित्वात् न हि प्रयत्नानन्तरीयकत्वं
धर्मः न हि कश्चिच्छब्दः प्रयत्नानन्तरीयकोऽस्ति
भागयोनित्वाच्छब्दस्य । अथ पारम्पर्यक्रमेण प्रयत्ना

कारणम् पारम्पर्येण सर्वेऽर्थाः शब्दकारणमिति विशेषणमयुक्तं प्रयत्नानन्तरीयकत्वादिति अनित्यः शब्दो यतस्तदुत्पत्तेरिति वक्तव्यम् । यच्चेदं प्रयत्नानन्तरीयकत्वं शब्दस्यानित्यत्वे कारणं भावाभिधानेनोच्यते किं पुनस्तत् किं जन्म उतोपलब्धिरिति । यदि तावज्जन्म तन्नैव समर्थमिति प्रयत्नानन्तरीयकत्वग्रहणं व्यर्थम् । न हि भवत्यनित्यः शब्दो देवदत्तकृतकत्वादिति । अत एवं वक्तव्यं जन्मवत्त्वादिति । यदि चेदं जन्म व्यभिचारि भवेत् ततः प्रयत्नानन्तरीयकत्वग्रहणमर्थवत् । किं कारणम्? व्यभिचारिणि विशेषणान्यर्थवन्ति भवन्ति । अथोपलब्धिः प्रयत्नानन्तरीयकत्वादित्यनेन भावाभिधानेनोच्यते एवमप्युपलब्धेरेव सामर्थ्यमस्तीति व्यर्थं विशेषणम् । न ह्युपलभ्यमानं द्वेधा भवति नित्यमनित्यं प्रयत्नानन्तरीयकमन्यथा चेति । अथ ब्रूषे प्रयत्नानन्तरमुपलभ्यमानं घटत्वं नित्यमिति त्वयैवैतद्व्यभिचारितमिति शब्दानित्यत्वानुमितौ प्रयत्नानन्तरीयकत्वं न हेतुः अव्यापकं च प्रयत्नानन्तरीयकत्वं शब्दराशेः पक्षीकृतत्वात् । अथ शब्दविशेषं पक्षीकृत्योच्यते तत्राप्याद्य एव प्रयत्नानन्तरीयकत्वं सम्भवति न द्वितीयादिष्विति अव्यापकत्वमनिवृत्तम् । अथ यः प्रयत्नानन्तरीयकः सोऽनित्य इति तथाप्यन्यो हेतुर्वक्तव्यः । हेतोः पक्षविशेषणत्वेनोपात्तत्वात् । यदप्युक्तमप्रयत्नानन्तरीयकस्य त्रयी गतिरिति किञ्चिन्नित्यमाकाशाद्येकेषां किञ्चिदनित्यं विद्युदादि किञ्चिदसदेवाकाशकुसुमादि । इदं महानैयायिकत्वं महावादित्वं च यत्तावदसदप्रयत्नानन्तरीयकं च किञ्चिच्चेति चित्रम् । नित्यं तु किञ्चिद्भवति न पुनरप्रयत्नानन्तरीयकत्वम् । न ह्याकाशं न प्रयत्नानन्तरीयकमिति शक्यं वक्तुम् अप्रयत्नानन्तरीयकस्य जन्म-

विशेषितत्वात् न चाकाशस्य जन्मास्ति तस्मात्
नन्तरीयकं नाप्यप्रयत्नानन्तरीयकमाकाशमिति । एते
व्याख्याताः—अगात्वेऽप्येवमेवेति । तदेवमेतानि न हेत्वा
सम्भवन्तीदमेवार्षं हेतुलक्षणं न्याय्यमिति ॥

**साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्**

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति सू-
त्रम् । अस्योदाहरणोपलक्षणमर्थः । साध्यस्य साधर्म्यं सा-
ध्येन समानधर्मता । अत्रापि साध्येनैव साधर्म्यं न पु-
ध्येनापि साधर्म्यमेव साध्येन न पुनर्वैधर्म्यमपि यस्मात्
साधर्म्यात् तद्धर्मभावी भवति । किं कुतश्चित् सा-
साधर्म्यात् तद्धर्मभावी न भवति ? न भवत्यपि यथा
त्त्वादेः कर्मणः तस्मात् साध्यसाधर्म्याद्यत्र तद्धर्मो भा-
भवति तद्धर्मभावी सोऽयं दृष्टान्तः साध्यसाधर्म्यात्
भावित्वेन विशेषणेन युज्यमान उदाहरणं भवति अ-
ऽनेन धर्मयोः साध्यसाधनभावः इत्युदाहरणम् । ननु
रणकारकपरिग्रहाद्वचनमुदाहरणं दृष्टान्तश्चार्थो न
सामानाधिकरण्यं युज्यते न हि विषाणादिमदित्यभिधा-
समानाधिकरणं भवति । नैष दोषः वचनविशेषणत्वेन
स्योपादानान्न स्वतन्त्रो दृष्टान्त उदाहरणम् । किन्तु
साधर्म्यात् तद्धर्मभावित्वे सति अभिधीयमान इति ।
भावी तस्य धर्मः तद्धर्मः तस्येति साध्यस्य ।
द्वेधा भवति धर्मो धर्मी च । एकदा धर्मो विशेषणत्वेन
धर्मी विशेषणत्वेनेति तस्येति धर्मिग्रहणं युक्तम् । न
धर्मस्य ग्रहणात् यस्माद्धर्मिणो धर्मा उत्पत्तिधर्मकत्वादयः
धर्मस्य, धर्मे च साध्यमुदाहरणसाधर्म्यादिति व्याघातः

स्योदाहरणेन किञ्चित्साधर्म्यं किन्तु धर्मिणः साध्यसाधर्म्यंचोदाहरणस्य धर्म्यंश एव साध्ये चोपसंहारो धर्मिण्येव तस्माद्धर्मी साध्य इति तस्य धर्मिणः साध्यस्य यो धर्मः साध्यः स यस्मिन् दृष्टान्ते भवति विद्यते स दृष्टान्त उदाहरणम् । उदाहृणं स्थाल्यादिद्रव्यमिति तदुत्पत्तिधर्मकं चानित्यं दृष्टमिति ॥

## तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

तद्विपर्ययाद्वा विपरीतम् । साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति । उदाहरणमवीतहेतौ द्रष्टव्यमिति ।

अन्ये तु साध्यसाधर्म्यात् तद्धर्मभावित्वं दृष्टान्तस्येति सूत्रं पठन्ति । तेषां त्वयमभिप्रायः दृष्टान्तोदाहरणयोर्माभूदैक्यमिति । किं पुनस्तद्धर्मभावित्वं साध्यसाधनाभ्यां योगः साध्यसाधनयोगे च तद्धर्मभावी भवति अतो भावाभिधानेन साध्यसाधनाभ्यां योगोऽभिधीयत इति । एतच्च सूत्रमपरे दूषयन्ति । अस्माकन्तु नायं सूत्रपाठः तस्मान्नायं दोष इति । एतस्मिन्नपि पाठे किल भाविग्रहणमनर्थकम् । कस्मात् ? सर्वावयवानां साध्यधर्मभावित्वात् । यस्मात् किल सर्वावयवाः साध्यधर्मभाविनो भवन्ति भावयन्ति गमयन्तीति नायं सूत्रार्थ इति ।

अन्ये तु तद्धर्मभावीत्येतत्पदमन्यथा निराकुर्वन्ति तद्धर्मभावी भवन्नुष्णभोजिन्यायेन(१) वा भवेत् दण्डिन्यायेन वा भवेत् । तद्यदि तावदुष्णभोजिन्यायेन उष्णं भोक्तुं शीलमस्येत्युष्णभोजी तद्धर्मं वा भावयितुं शीलमस्येति तद्धर्मभावी । अत्रापि भावयितुं गमयितुं यावदुक्तं

(१) उष्णभोजीति क्वचित् ।

स्यादिति नायं सूत्रार्थ इति न किञ्चिदेतत्। न्यायस्तु दण्डो यस्यास्तीति स दण्डी तद्धर्मभावो ऽस्ति स भवति तद्धर्मभावी । अत्र भावग्रहणमनर्थकं तद्धर्मभावीति । कथमिति ? तद्धर्मश्चासौ भावश्चेति तद्धर्मभावो यस्यास्ति स भवति तद्धर्मभावी । एवं सति विशेषणभावानुपपत्तेः तद्धर्मभावीति युक्तम् । न हि तद्धर्मश्च भावश्च स्याद्यतो विशेषणविशेष्यभावः समर्थितः स्यादिति । अतस्तद्धर्मीति किल वक्तव्यम् । न वक्तव्यं तद्धर्माणामुभयथाभावात्—उभयथा भवन्ति धर्मा विधीयमानाः प्रतिषिध्यमानाश्च । तत्रान्वयिनि विधीयमानधर्मवानन्तउदाहरणम् यथा स्थाल्यामुत्पत्तिधर्मकत्वमनित्यत्वं च द्वौ धर्मौविति । तस्मात्तद्धर्मश्चासौ भावश्चेति युक्तं साधर्म्योदाहरणम् । यत् पुनरेतत्तद्धर्मीति वक्तव्यम् एतदपि न युक्तम् । न हि बहुव्रीहौ पुनर्मत्वर्थीयो लभ्यत इति यथावश्यं वयं शिक्षयितव्याः । तत एव च तद्धर्मीति युक्तमिति । सन्ति चैवं वादिनो येषां कृतकत्वानित्यत्वे इति । तन्निराकरणार्थं चेदं वक्तव्यं तद्धर्मश्चासौ भावः

तदेतस्मिन्नवयवत्रये एवं लक्षणेनोपपादिते तेषां दुर्विहिता इति । अनेन वाक्येन महानैयायिकत्वं ख्यापितं भवति ।

तथा सिद्धो दृष्टान्त इत्यन्ये । कः पुनरस्यार्थः साध्यः साधयितुमिष्टस्तथायमसिद्धोऽनित्यत्वेन यथा एव साध्योविशिष्टः प्रत्ययभेदभेदित्वेन तथा यः दृष्टान्तः साध्यसाधनवानिति । अत्र विस्फूर्जतापि स्वासिद्धजना कृतकत्वानित्यत्वयोः न शक्यः सम्बन्धो दर्शयितुम्

तकत्वानित्यत्वयोः कालभेदाद्वस्तुव्यवधानाच्च । अन्यदा कृतकत्वमन्यदा चानित्यत्वमिति । यदा च वस्तु न तदा प्राक्प्रध्वंसाभावौ स्त इति । एतेन तयोः सम्बन्धिनिदर्शनं दृष्टान्त इति प्रत्युक्तम् ।

"साध्येनानुगमो हेतोः साध्याभावे च नास्तितेति" च ॥

**उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥**

उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः । एवं चायं कृतक इति । यथा तथेति प्रतिबिम्बनार्थम् । किं पुनरत्र प्रतिबिम्बनम् ? दृष्टान्तगतस्य धर्मस्याव्यभिचारित्वे सिद्धे तेन साध्यगतस्य तुल्यधर्मता एवं चायं कृतक इति । साध्ये वा सम्भव उपनयार्थः । ननु च कृतकत्वादिसनेन सम्भव उक्तः ? नोक्तः साध्यसाधनभावनिर्देशात्—साध्यसाधनभावमात्रनिर्देशः कृतः कृतकत्वादनित्यः शब्दो भवति । न पुनः शब्दे कृतकत्वमस्ति नास्तीत्युपनयेन सम्भवो गम्यते अस्ति च शब्दे कृतकत्वमिति । स यदा साधर्म्येणोदाहरणं तदा तथेति, यदा वैधर्म्येण तदा न तथेति ॥

**हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥३९॥**

हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् । प्रतिज्ञायाः पुनर्वचनमिति । प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ साध्यविपरीतप्रसङ्गप्रतिषेधार्थं यत् पुनरभिधानं तत् निगमनमिति । एतस्मिन् सूत्रार्थे परस्यावकाशो नास्तीति । अभ्युपेत्य तद्दोषनिराचिकीर्षया वाक्यमुपक्षिप्यते—

"उपनयनिगमने नावयवान्तरे अर्थाविशेषात्" । इति

इदं तावद्वाक्यं यथाश्रुति न केनचिदर्थेन सम्बध्य-

ते । अथ हेतूपनयावेकत्वेन पक्षीकृत्यार्थाविशेषादिति हे
विपक्षवृत्तित्वाद्विपर्ययहेतुरर्थाविशेषस्यैकत्वे ऽदर्शनादिति
च दर्शनादिति । यथा बहूनां घटानामेकोऽर्थो जलाहर
चैकत्वमिति । अथैकप्रयोजनकत्वेन पक्षीकृत्य ब्रूयादेकप्रयो
जनत्वमिति ? तथापि हेतुर्नास्ति प्रतिज्ञार्थेनाक्षिप्तत्वात्
पनययोरेकार्थत्वमिति प्रतिज्ञार्थः । अर्थाविशेषादिति
र्थोऽपि स एव । अन्यश्च हेत्वर्थः अन्यश्चोपनयार्थ इत्यसि
हेतुस्तद्दूर्णितम् ।

"पक्षधर्मत्वसम्बन्धसाध्योक्तेरन्यवर्जनम" ।

इत्येतदनेनैव प्रत्युक्तम् । यदपि 'यथा तथेत्युपसंहारे कृते
शब्देन सर्वसामान्यं वा कृतकत्वसामान्यं वाऽभिधीयते
विशेषो वा, सर्वसामान्यं तावन्न युक्तम् तथेतिव्यपदेशा
दिति । कृतकत्वविशेषोऽपि न युक्तः अन्यथा शब्दस्य
त् । परिशेषात् कृतकत्वसामान्यं तच्च हेतुनैवोक्तमिति' ।
युक्तम् । उपनयस्योपमानार्थत्वात्——उपमानार्थ उपनय
श्चोपमानं न सर्वथा साध्यसाधनभावमाश्रित्य प्र
यत्किञ्चिदेतत् । कृतकत्वसामान्यं तु शब्दसन्निधावा
इति चित्रमिदम् । कृतकत्वं खलु शब्दसन्निधावभिधी
शब्देन च विशिष्यमाणं कथं सामान्यं भविष्यति । त
मान्यविशेषवान् हेतुरिति गतार्थत्वान्नोपनय इत्यनेन
यदप्युक्तं यथा तथेत्युपमानमेतत्, उपमानं चोपनयो न
इति एतेन निगमनं प्रत्युक्तम् । ते एते वीतावीत
तन्त्रे पञ्चावयवे न पुनरेकमन्वयव्यतिरेकि चेति ॥

**अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञा
हस्तर्कः ॥ ४० ॥**

अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति सूत्रम् । अस्यार्थः पूर्ववत् । अविज्ञाततत्त्वेऽर्थे इति । यथा सोऽर्थो भवति सोऽस्य तथाभावस्तत्त्वम् । एतस्मिन्नविज्ञाते सामान्यतो ज्ञाते (१) । कुतः पुनरेतत् सामान्यतोऽवगतमिति ? अविज्ञाततत्त्वेऽर्थे इत्यभिज्ञानात्—यस्मादयमाहाविज्ञाततत्त्व इति, तेन ज्ञापयति सामान्यमवगतमिति । यदि पुनः सामान्यमपि नाधिगतं स्यान्न ब्रूयादविज्ञाततत्त्व इति, अविज्ञात इत्येवं ब्रूयादिति।

अविज्ञाततत्त्व इति समासोऽयं न चार्थो गम्यते किमविज्ञातं तत्त्वं येन उताविज्ञातं तत्त्वं यस्येति । कश्चात्र विशेषः ? यद्यविज्ञातं तत्त्वं येन सोऽयमविज्ञाततत्त्वः परिच्छेत्ता तस्मिन्नविज्ञाततत्त्वे परिच्छेत्तरि तदवगमार्थमूहस्तर्क इति प्राप्नोति । अथाविज्ञातं तत्त्वं यस्य तदविज्ञाततत्त्वं तस्मिन्नविज्ञाततत्त्व इति ? षष्ठीविग्रहेण युक्तमेतत् । विशेषहेत्वभावान्नार्थाधिगमः नात्र विशेषहेतुरिति किमयं तृतीयाविग्रहेण समास उत षष्ठीविग्रहेणेति । युक्तम् अर्थग्रहणसामर्थ्यात्—यस्मादविज्ञाततत्त्वेऽर्थ इति, अर्थश्चार्यमाणत्वात् कर्म, तेन ज्ञापयति षष्ठीसमासोऽयं न तृतीयाविग्रह इति । अर्थग्रहणमन्तरेणापि सामान्यतोऽवगतेरविज्ञातं तत्त्वं यस्येत्यनुक्तेऽप्यर्थे गम्यत एवैतदर्थं इति । एवमपि समासे सन्देहतादवस्थ्यम् । माभूत् समासो वाक्यमेवास्तु अविज्ञातं तत्त्वमस्येति । भवत्येवाभीष्टार्थप्राप्तिः लाघवार्थं तु समासकरणम् । अनुक्तेऽप्यर्थे सामर्थ्याद् गम्यते अविज्ञातं तत्त्वमस्येति । अत्रोक्तं सन्देह एवं स्यादिति समस्तानभिधानप्रसङ्गाच्च । यदि च सामर्थ्यमाश्रित्यार्थग्रहणं प्रतिषिध्यते तदैवं युक्तमूहस्तर्क इति, सामर्थ्यतः शेषं गम्यत इति, तस्मादर्थ-

(१) ऽवगम्यते इति २ पु० पा० ।

ग्रहणं ज्ञातृनिराकरणार्थमिति ।

अविज्ञाततत्त्व इति न वक्तव्यं गम्यमानत्वात्
रणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इत्युक्ते गम्यते ए
विज्ञातं तत्त्वमस्येति । अत्र तावदुक्तं सम
धानप्रसङ्गादिति । माभूत् समस्ताभिधानं किं
च्यते । न । बुद्धिधर्मनिराकरणार्थत्वात्—उभयथा सं
भवति विज्ञाततत्त्वेऽविज्ञाततत्त्वे च, तत्र तावद्विज्ञाततत्त्वे
शुश्रूषाश्रवणधारणविज्ञानोहापोहतत्त्वाभिनिवेशा बुद्धिध
तत्त्वमवधृतं विजानाति, विज्ञातमूहत इति, किमुक्तम्भवति
ऽस्यावर्थः पूर्वमनेन विज्ञातस्तमेवोहत इति पूर्वानुभूतपरि
इत्युच्यते, न त्वयं तर्कः । यः पुनरविज्ञाततत्त्वेऽर्थे ऊहः स

षष्ठ्यभिधानमधिकरणार्थ(१)सम्भवादविज्ञातत
स्येति वक्तव्यम् अविज्ञाततत्त्वोऽर्थो ज्ञायमानः कर्म क
र्मणि च षष्ठ्येव ज्यायसी यथा घटस्य विज्ञानमिति ।
भक्तिव्यत्ययात् । षष्ठीस्थल एवैषा सप्तमी द्रष्टव्या

"इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतवः"(२)

इति व्यसयः । कस्मात् ? यदि व्यसये
श्चिदर्थो लभ्यते युक्तो व्यसयः, यथा तस्मिन्नेवे
षावयुगपत् संयोगविशेषा" इति अधिकरणार्थ इषे
ऽवयवास्तेषामपि संयोगविशेषास्ते ऽपि कर्मान्यत्वे हेतवः
न पुनरिह व्यसयेन फलं पश्यामः, तस्मादयुक्तो
व्यसय इति । न, युक्तः । सामान्याधिगतस्य विशे
र्थे—यस्यैव सामान्यमधिगतं तद्वृत्तिनो विशेषा अप्य

(१) षष्ठ्यनभिधानमधिकरणार्थो—पा० २ पु० ।
(२) वैशेषिकसूत्रम् ।

इति । ते च विशेषाः संयोगिनः समवायिनश्च भवन्तीति ।

कारणोपपत्तितः प्रमाणोपपत्तितः । उपपत्तिः सम्भवः—सम्भवत्यस्मिन्नर्थे प्रमाणमिति—भवेदयमर्थ इति । उदाहरणं योऽयं ज्ञाता ज्ञातव्यमर्थं जानाति तं तत्त्वतो जानीयेति किमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्म इति । एकतरगनुजानातीति भाष्यम् । अनुत्पत्तिधर्मकेनानेन भवितव्यमिति य ऊहः स तर्क इति । नन्वेतद् तत्त्वज्ञानमेव, किमुच्यते तत्त्वज्ञानार्थमिति । नेदं तत्त्वज्ञानमनवधारणाद् न ह्ययमवधारयत्येवमेवेति । किं त्वनुत्पत्तिधर्मकेन ज्ञात्रा भवितव्यमिति प्रमाणविषयमनुजानाति। कथं पुनरयं तत्त्वज्ञानार्थं भवति? प्रमाणविषयविवेचनाद् । प्रमाणविषयमनेन विविनक्ति अयमर्थो युक्त इति। प्रमाणानि पुनः प्रवर्तमानानि तर्कविविक्तमर्थं तथाभूतमवगमयन्तीति ।

ऊहः संशयनिर्णयाभ्यां न भिद्यत इति केचित् । अयं किलोहः संशयो वा स्यान्निर्णयो वा ? यदि संशयस्तदा तेन सङ्गृहीतत्वात् पृथक् न पठितव्यः । अथ निर्णयस्तदा तेन सङ्गृहीत इति । अपरे त्वनुमानं तर्क इत्याहुः । हेतुस्तर्को न्यायोऽन्वीक्षा इत्यनुमानमाख्यायत इति । अपरे त्वनुमानमेव तर्कं युक्त्यपेक्षं वर्णयन्ति ।

यत्तावन्निर्णयसंशयाभ्यां नोहो भिद्यत इति । तन्न । संशयस्वरूपानवबोधात् । अविज्ञाततत्त्वेऽर्थे भवतीति सामान्येनाक्षिप्तो भवान् । संशयमविज्ञाततत्त्वे भवतीति, न पुनः संशयस्वरूपं व्यज्ञायि भवता । अनवधारणात्मकः प्रत्ययः संशयः किंस्विदिति । अवधारणात्मकः प्रत्यय एवमिदमिति निर्णयः । अयन्तु संशयाद् निर्णयाद् + प्रच्युतः कारणोपपत्तिसामर्थ्याद् । संशयेन कारणोपपत्तिरस्ति, निर्णयं चाप्राप्तो

विशेषादर्शनाद्विशेषदर्शनान्निर्णयो भवति न चास्मिन् वि-
र्शनमस्ति । एतेनानुमानं तर्क इत्येतदपि प्रत्युक्तम् । विशे-
नादिति । किं पुनरस्य स्वरूपं ? भवेदित्येष प्रत्यय इत्येतस्य
मिति । यैरप्यनुमानं युक्त्यपेक्षं तर्क इत्युच्यते तैरप्यनुमान-
भेदः स्वयं उक्तः । युक्तिः–प्रमाणोपपत्तिः, प्रमाणोपपत्ति-
माणो यः प्रत्ययः स तर्क इति केवलं सञ्ज्ञाभेदमात्रम्
न प्रमाणोपपत्तिर्युक्तिः ? अनुमानं युक्त्यपेक्षमित्यपेक्षा-
क्तव्यम् । स्वविषयाधिगमे चानुमानं किमपेक्षते । अथ-
पेक्षा युक्तिरित्युच्यते ? एवमप्यनुग्रहार्थो वक्तव्यः–कथं
गमाभ्यामनुमानमनुगृह्यत इति । अथानुमानस्य प्रत्यक्षाग-
त्वं ? तत्रापि कः तर्कः ? त्रीण्येतानि प्रमाणविषयतया प्रसि-
ति । भवेत्–अवधारण–प्रत्ययौ भिन्ननिमित्तौ विशेषवत्त्वा-
क्षानुमानप्रत्ययवत् । अनुमानं तर्कः लिङ्गलिङ्गिसम्बन्ध-
त्वात् अनुमानवत् । न । तर्कस्वरूपानवबोधात्–नैव लि-
सम्बन्धस्मृत्यपेक्षः तर्कः । कथमिति ? द्वयस्यान-
यत्र द्वयमधिगम्यते धर्मी साधनधर्मश्च तत्रानुमा-
यत्र पुनर्द्धर्मिमात्राधिगतिर्न लिङ्गाधिगतिरस्ति स तर्क-
तस्मात् लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वमनुपपन्नम्(१) ।
धर्मिगतधर्मोपलब्धौ प्रवर्तते न पुनस्तर्कः, तर्कस्त्वन्यतरा-
नापि प्रवर्तते यथा भवितव्यमत्र(२) पुरुषेणेति, यथाऽत्र
ऽश्वा वाह्यन्त इति अश्ववाहनं न पुरुषधर्मः सोऽयमन्य-
न्यया स्थाणुव्यवच्छेदमात्रमूह इति । सोऽयं तर्कः प्रमा-
न्धत्त इति प्रमाणसहितो वादेऽपदिष्टः न पुनरयं प्रमा-
दकत्वादिति ॥

(१) अयुक्तमिति २ पु० पा० । (२) मनेनेति २ पु०

**विमृष्य(१) पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः॥४१॥**

एतस्मिन् तर्कविषये "विमृष्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय" इति सूत्रम् । सम्बन्धोऽर्थश्च पूर्ववदिति । विमृष्येति विमर्षं कृत्वा । पक्षप्रतिपक्षाभ्यां—पक्षशब्देन पक्षविषयं साधनमुच्यते प्रतिपक्षशब्देन पक्षविषयस्य साधनस्योपालम्भः ताभ्यां साधनोपालम्भाभ्यां यदर्थावधारणं स निर्णय इति ।

क्व पुनरयं नियमः ? किं तावन्निर्णये ? आहोस्वित् ? पक्षप्रतिपक्षाभ्याम् ? अथ विमृष्यैवेति ? । यदि विमृष्य पक्षप्रतिपक्षाभ्यामेव निर्णय इति निर्णये नियम ? इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्यस्य व्याघातः । एतेन विमृष्यैवेति प्रत्युक्तम् । अथ पक्षप्रतिपक्षाभ्यां निर्णय एव ? उभयाश्रयो निर्णयः प्राप्नोति । तर्कविषये एव नियमो नान्यत्र, योऽयं तर्कस्य विषय एतस्मिन् तर्कविषये नियमो नान्यत्र,—योऽयं तर्कस्य विषय एतस्मिन् तर्कविषये विमृष्य पक्षप्रतिपक्षाभ्यामेव निर्णयो भवति न पक्षप्रतिपक्षाभ्यामेव निर्णयो विमृष्यैवेति सामान्यनिर्णयलक्षणमेतत् । कुतोऽयं नियमस्तर्कविषय इति ? तर्कस्यानन्तरोद्देशात् तर्कविषय इति नियमः । अन्यथापि निर्णयस्य भावान्न निर्णय इति । अथ निर्णयस्य किं लक्षणम् ? अर्थपरिच्छेदोऽवधारणं निर्णय इति । सोऽयं निर्णयः प्रमाणविषये भवन्नेकशः प्रमाणैः क्रियते संहत्य च, तर्कविषये संहत्यान्यत्रैकश इति । वादे शास्त्रे च विमर्षवर्ज—वादे पक्षप्रतिपक्षाभ्यामेव, न शास्त्रे वादे वा विमर्षोऽस्ति उभयोर्निश्चितत्वात् शास्त्राभ्युपगतपदार्थस्य निश्चितत्वाच्च ।

पक्षप्रतिपक्षशब्देन साधनोपालम्भयोर्ग्रहणमित्ययुक्तं प्रमाणाभावात्—पक्षप्रतिपक्षशब्देन साधनोपालम्भावुच्येते इति किं

(१) विमृश्येति क्वचित् ।

प्रमाणम् ? कस्मात् पुनर्यथाश्रुतं न भवति पक्षप्रति-
कर्मत्वात् न च कर्मार्थपरिच्छेदकं परिच्छेद्यत्वात्, तस्मात् प्र-
तिपक्षशब्देन परिच्छेदकयोः साधनोपालम्भयोर्ग्रहणम् ,
र्मकत्वात् । तयोरेव कस्मान्न ग्रहणमेवं चोक्तम् विमृश्य
पालम्भाभ्यामर्थावधारणं निर्णय इति । एवं सति निर्
भवति । न च लाघवकृतः कश्चिद्विशेष इति ।नैकविषय-
त्वात्—यद्विषयौ साधनोपालम्भौ तद्विषयो निर्णयः
न्यथा हि साधनोपालम्भाभ्यां निर्णय इत्युक्ते न
क्व पुनर्निर्णय इति । पक्षप्रतिपक्षशब्दाभ्यां च
पालम्भयोर्ग्रहणं तद्विषयस्य चेति । अर्थग्रहणं
कर्तव्यम् गम्यमानत्वात् । केन ? विमृश्य
पक्षाभ्यामेवावधारणमित्युक्ते गम्यते ऽर्थस्येति, तस्मात्
न कर्तव्यम् । न, कर्तव्यं—श्रुतिसामर्थ्यादन्यतरनिर्णय
गम्यमानार्थग्रहणं यत् करोति तेन ज्ञापयत्यन्यतरस्
निर्णय इति । पक्षप्रतिपक्षाभ्यामर्थावधारणमित्ययुक्तं
स्मात् ? अधिगतेः नेदं पक्षप्रतिपक्षाभ्यां सहिताभ्या
किं तर्ह्येकस्माद्योऽवतिष्ठत इति । उभाभ्यामेवेत्याह ।
उभयनिवृत्तावनिवृत्तो हि विमर्शः उभयावस्थाने
इति । यदा त्वेकोऽवतिष्ठत एको निवर्तेत इति तदा
इति । अतः संहत्य पक्षप्रतिपक्षौ निर्णयहेतू इति ।
विषये कदा निर्णयो भवति ।किं प्रथमे उत द्वि
तृतीये इति । सर्वत्र भवत्यर्थस्य तथाभावात् अप
इति युक्तम् । कथमिति । एकस्तावत साधनेन पक्षम
द्वितीयः साधनं दृष्ट्वा निवर्तते साधनाभासं वा दु
धनदोषोद्भिभावयिषया प्रवर्तते तस्मिन्निवर्त्य साधनं

इदानीं निश्चितं साधनमिति यदि मन्यते न प्रवर्तते । अथ दूषणाभासमिति बुध्यते तदुद्भावनार्थं प्रवर्तते । तन्निवृत्तौ द्वितीयपक्षसाधनमपि निवर्तते । किं कारणम् ? प्रथमपक्षसाधनस्य निर्दोषत्वात्, निर्दोषे च प्रथमपक्षसाधने न द्वितीयस्यावकाश इति निवर्तते द्वितीयः पक्ष इति योऽत्रावतिष्ठते तस्मिन्निर्णयः । सोऽयं निर्णयः सम्भवासम्भवाभ्यां पक्षप्रतिपक्षयोः संहत्य क्रियते ।

निर्णयोऽनुमानमेवेति केचित्— केचिद्वर्णयन्ति निर्णयोऽनुमानमेव न पदार्थान्तरमिति । न । लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वादनुमानस्य, निर्णये च तदभावः प्रमाणफलत्वात्, प्रमाणमनुमानं, प्रमाणफलं तु निर्णयः । निर्णयः स्वविषय एव, अनुमानं तु स्वविषये ऽन्यत्र च । यथा धूमदर्शनं धूमपरिच्छेदे नानुमान,मपि तु निर्णय इति । यदा च परिच्छिनत्ति धूमेन तदाऽनुमीयते ऽनेनेत्यनुमान,मग्निपरिच्छेदः फलम् । यदा च भावसाधनमाश्रित्योच्यते ऽनुमानं निर्णय इति तदाऽभ्यनुज्ञया वर्तितव्यम् । यदा (च) तु करणसाधनमाश्रित्योच्यते ऽनुमानं निर्णय इति, तदा प्रतिषेधो वक्तव्यः कार्यकारणयोर्भेदात्-कारणमनुमानं, कार्यं निर्णयः, तस्मान्नानुमानं निर्णय इति ॥

इति—औद्द्योतकरे न्यायवार्त्तिके(१)
प्रथमस्याध्यायस्याद्यमाह्निकम् ॥

---

(१) परमर्षिभारद्वाजोद्द्योतकरीये न्यायसूत्रवार्त्तिके-इति क्वचित् ।

## अथ प्रथमेऽध्याये द्वितीयमाह्निकम्।

तिस्रः कथा भवन्ति वादो जल्पो वितण्डेति। नै
नियमः, किं तर्हि ? विचारवस्तुनियमः—यद्वस्तु विचार्यते
विचार्यते। तत्र विचारो वादो जल्पो वितण्डेति। तत्र
भिः सह वादः। विजिगीषुणा सह जल्पवितण्डे। तत्र
लक्षणापदेश इति वादस्य लक्षणमुच्यते। तत्र प्रमाणतर्क
पालम्भोवाद इति सूत्रम् ॥

**प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरु श्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

तत्र वादः पक्षप्रतिपक्षपरिग्रहः। कौ पुनरेतौ पक्षप्र
वस्तुधर्मावेकाधिकरणौ विरुद्धावेककालावनवसितौ। वस्तु
वस्तुविशेषौ—वस्तुनः सामान्येनाधिगतत्वात् विशेषतो
त्वाच्च विशेषावगमनिमित्तो विचारः तस्माद्वस्तुधर्मौ विशे
धिकरणौ, नानाधिकरणौ विचारं न प्रयोजयतः उभयोः
पपत्तेः तद्यथा अनित्या बुद्धिर्नित्य आत्मेति। अविरुद्धावपि
विरुद्धौ तौ विचारं प्रयोजयतो नाविरुद्धाविति तद्यथा
द्द्रव्यं गुणवच्चेति। एककालाविति भिन्नकालयोर्न विचा
जकत्वं प्रमाणोपपत्तेः, यथा क्रियावद् द्रव्यं निष्क्रियं चेति
भेदे सति। अनवसिताविति—अनिश्चितौ विचारं प्र
नावसिताविति निर्णयोत्तरकालं विचाराभावात्
विरुद्धावेवंविशेषणौ धर्मौ पक्षप्रतिपक्षौ। तयोः परिग्र
म्भावनियमः। एवंधर्मोऽयं धर्मी नैवंधर्मेति। सोऽयं
पक्षपरिग्रहो वादः। अस्य च कथामार्गत्रये ऽपि समान
शेषणार्थं प्रमाणतर्कसाधनोपालम्भ इति। प्रमाणैस्तर्केण च
मुपालम्भश्चास्मिन् क्रियत इति—अस्मिन् भवतीति। अ

सप्तमीनिर्देशो विषयज्ञापनार्थः अस्मिन्—विचारे ।

कथं पुनः तर्केण साधनमुपालम्भश्च अप्रमाणत्वात्—प्रमाणानुग्राहकत्वात् न प्रमाणसङ्गृहीतस्तर्को न प्रमाणान्तरमित्युक्तं, सोऽयमप्रमाणात्मकः सन् कथं सिद्ध्युपालम्भयोः कारणं भविष्यति ? न ब्रूमस्तर्कः सिद्ध्युपालब्ध्योः कारण,मपि तु प्रमाणविषयविवेचनात्तर्कः प्रमाणान्यनुगृह्णातीति तर्कविविक्तं विषयं प्रमाणानि प्रवर्तमानानि परिच्छिन्दन्ति । सोऽयं प्रमाणानामनुग्राहकत्वात् प्रमाणसहितो वादेऽपदिष्ट इति। साधनमुपालम्भश्चास्मिन् भवतीति किं तावत्? सिद्धिः साधनमुपालम्भनमुपालम्भः अथ साध्यतेऽनेनेति साधनम्, उपालभ्यते ऽनेनेत्युपालम्भः ? यदि तावद्भावसाधनौ साधनोपालम्भशब्दौ ? तदा प्रमाणैस्तर्केण च न युक्तौ प्रमाणानां तर्कस्य च पराप्रतिपादकत्वात् प्रमाणान्यात्मप्रतिपत्तिसाधनानि, परप्रतिपादनार्थश्चायं विचारः तस्मान्न प्रमाणैस्तर्केण च सिद्ध्युपालब्धी भवतः। अथ करणसाधनौ? तथापि पञ्चावयवोपपन्न इति पृथक् न पठितव्यं, किं कारणम्?प्रमाणतर्कसाधनोपालम्भ इति करणसाधनेन पदेनावयवार्थस्योक्तत्वात्। न। अन्यार्थत्वात्—पञ्चावयवोपपन्न इत्यस्यान्योऽर्थः तथा च वक्ष्यामः। अथैतौ साधनोपालम्भशब्दौ भावसाधनौ किंविषयौ प्रमाणैस्तर्केण च क्रियेते?। ननूक्तं पक्षप्रतिपक्षविषयाविति—पक्षविषयं साधनम्, प्रतिपक्षविषय उपालम्भः? सत्यमुक्तम् न पुनर्युक्तमुक्तम् । का पुनर्युक्तिहानिरत्र ? उपालम्भस्य प्रतिपक्षाविषयत्वात्, प्रमाणतर्कसाधना सिद्धिः पक्षस्य भवतु, न पुनरुपालम्भस्य प्रतिपक्षो विषयः, ? न ब्रूमः प्रतिपक्षविषय उपालम्भ इति, किन्तु साधनविषयः, प्रतिपक्षस्य यत् साधनं तद्विषय उपालम्भ इति । कथं पुनः प्रतिपक्षसन्निधावुपदिश्यमान उपालम्भशब्दः

प्रतिपक्षव्यतिरेकेण साधनेन सम्बध्यते ? सामर्थ्यादसामर्थ्यो पालम्भयोग्यं तदुपालभ्यते न च प्रतिपक्ष उपालम्भयोग्य मिति ? उपालभ्यमानस्य चानुपालभ्यमानस्य च वस्तुनस्तथा तथाभूतमेव वस्तूपालभ्यमानं तथाभूतमेवानुपालभ्यमानम् । ऽपि तर्हि तुल्यम् ? साधनमपि करणं तदपि स्वरूपं न करो हाति, तस्मात् साधनस्याप्युपालम्भो न युक्त इति ? । एवमे पालम्भः करणे न कर्मणि, कर्मणः स्वविषये सामर्थ्यात् स्वविषये समर्थं, करणमप्येवं तस्य तु विषयान्तरे न सा मस्ति । यच्च विषयान्तरे ऽसमर्थं न तेन कर्मणः करणस्य गुण्यम् । कस्य तर्ह्ययमुपालम्भो ? यो निगृह्यते । कश्च नि पुरुषः । अप्रतिपत्तिविप्रतिपत्ती पुरुषस्य, न कर्मणो न क सोऽयं प्रतिपादयिता ऽसमर्थयोः कर्मकरणयोरुपादानाद्वि प्रतिपत्तापि यथाभिहितपदार्थाप्रतिपत्त्या । सोऽयं पुरुषो नद्वारेणोद्भाव्यत इति वचन उपचर्य्य पुरुषधर्मं वचनगुण इति । कथं पुनरयमर्थः सूत्रपदेन लभ्यते ? लभ्यत इत्याह प्रमाणतर्कसाधनः प्रमाणैस्तर्केण च साधनस्योपालम्भः प्रमा साधनश्च प्रमाणतर्कसाधनोपालम्भश्च प्रमाणतर्कसाधनोपा एकस्य साधनशब्दस्य गम्यमानार्थत्वाल्लोपः यथोष्ट्रमुखीवि

अथ प्रमाणतर्कसाधनोपालम्भ इत्यनेन पदेन जल्पवित कथं वादो विशिष्यते नन्विदं पक्षप्रतिपक्षपरिग्रहवत् समानं भवति । न समानम्—वादे प्रमाणतर्कसाधनोपालम्भ तत्वात् प्रमाणतर्कसाधनोपालम्भ एव वादः (१) छला पालम्भे जल्पवितण्डे । यथा विषाणित्वं गवि गवये च संहृतकण्ठतया सास्नादिमत्तया च विशिष्यमाणमुभौ गोग

(१) छलादिसाधनोपालम्भ एव वादः इत्यधिकः पाठः पुस्त

शिनष्टि तथा प्रमाणतर्कसाधनोपालम्भ इति ।

छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानाद्वादे निग्रहस्थानप्रतिषेधो विशेषविधानात् ततश्चानुपालम्भो वाद इति ?। प्रमाणतर्कसाधनोपालम्भ इत्यभिधानाद्वादे ऽपि निग्रहस्थानानीत्यदोषः । उपालम्भग्रहणात् समस्तनिग्रहस्थानप्रसक्तौ सञ्ज्ञाभेदमात्रम् ?—यद्युपालम्भग्रहणाद्वादे निग्रहस्थानानि विद्यन्ते इति मन्यसे ननु सञ्ज्ञाभेदमात्रं जल्पाद्वादस्य न विशेषः तत्रापि निग्रहस्थानानीहापीति ? नोत्तरयोर्नियमार्थत्वात् । यस्मादेवोपालम्भशब्देन समस्तानि निग्रहस्थानानि लभ्यन्ते अत एव नियमार्थे उत्तरे पदे आरभ्येते सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्चेति । सिद्धान्ताविरुद्ध इत्यनेन किल पदेन विरुद्धो हेत्वाभासो लभ्यते । तन्न अन्यतोऽधिगतेः—अन्यत एवायं लभ्यते । पञ्चावयवोपपन्न इति पञ्चग्रहणात् न्यूनाधिके लभ्येते अवयवग्रहणात् तदाभासा लभ्यन्त इति लभ्यमानस्यार्थस्य पुनरभिधाने पिष्टं पिष्टं स्यात् तस्मान्नायमर्थः । अथ किमिदं पदं सिद्धान्ताविरुद्ध इत्यनर्थकमेव ? नानर्थकमपसिद्धान्तावरोधात्—

"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः" *

इति सोऽनेनावरुध्यते तस्मान्नानर्थकम् । कस्मात् पुनरयं नियमो वादे अवयवाभासोऽपसिद्धान्तश्च निग्रहस्थानमिति ?। गुर्वादिभिः सह वादोपदेशान्नियमः—यस्मादयं तत्त्वबुभुत्सुर्गुर्वादिभिः सह त्रिफलमाकाङ्क्षन् वादं करोति ततोऽस्य तत्त्वबुभुत्सावतस्तावत्सा वक्तव्यं यावदनेन ज्ञातव्यमप्रतिद्वन्द्वित्वात् । प्रतिद्वन्द्विना सह वादः, किं तु जल्पः तत्र समस्तनिग्रहस्थानप्रयोग इति युक्तम् । प्रमाणतर्कसाधनोपालम्भ इत्यभिधानात् उभयोः सिद्ध्यसि-

* गौ० सू० अ० ५ आ० २ सू० २३ ।

द्धिप्रसङ्गः ?-यदि प्रमाणतर्कसाधनोपालम्भो वादः उभ
प्रतिवादिनोः प्रमाणतर्कसाधनोपालम्भाभिधाने
इत्युभयपक्षसिद्ध्यसिद्धिप्रसङ्गः । नैष दोषः अप्रतिज्ञा
प्रतिज्ञायते उभयोर्वादिनोः प्रमाणानि सन्तीति, अपि
साधनं वक्तव्यमेतन्नियम्यते न पुनः साधनमेवैतद् भवतीति
मप्येवम् ।

अपरे तु स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद
दलक्षणं वर्णयन्ति । अत्र च पक्षविशेषणार्थमुपात्तयोः
शब्दयोरनुपपत्तिर्विकल्पानुपपत्तेः समासासम्भवाच्च ।
स्वपरशब्दौ परिग्रहवर्जनार्थौ ? वा स्याताम्, ? साधनीयदू
वा, ? पूर्वोत्तरपक्षार्थव्यवस्थापकौ वा ? पक्षप्रतिपक्षावद्योतकौ
थमद्वितीयपक्षाभिधायकौ वा ? एकस्य वाऽनेकविशेषणाभि
नोऽनेकशब्दाभिधानमिति ?। तत्र परिग्रहपरिवर्जनार्थता
पपन्ना, किमोर्थासम्भवात् । न परिग्रहार्थतायां किमोर्थः
वति 'कस्यायं स्वो भविष्यति कश्च स्वार्थे' इति स्वीका
ग्रहार्थः यस्य स्वीकारो भवति तस्य स्व इति । तदेव चिन्त्य
तद् स्वीकरणमिति । ममेति प्रत्ययोत्पत्तिकारणभावाभावौ
शब्दार्थः ? निर्दिष्टः स्वार्थो न पुनरस्य स्वार्थो, न हि शास्त्र
स्वः परो वा सम्भवति यदर्थमिदं स्यादिति । यच्च यस्य
ति तत्तस्यसिद्ध्यर्थं काञ्चिदुपकारं करोति, न पुनः स्वार्थे
ण कश्चिदुपकारः क्रियते तस्माद् परिग्रहवर्जनार्थौ
रशब्दौ न भवतः । साधनीयदूषणीयार्थौ स्वपरशब्दाविति
अथापीदं स्याद् साधनीयः स्वपक्षो दूषणीयः पर
अहो शब्दार्थकौशलं साधनीयः साध्यः स्याद् साधनीय

(१) नाधिकार २ इति पु० पा० ।

इति कुत एतत् ? लक्षणं चैतत् पक्षस्य साधयितुमिष्टः पक्ष इति साधनीयशब्देनापि तदेवोच्यते, व्यवच्छेदार्थं चेदमुच्यते स्वपक्षः परपक्ष इति । परपक्षाच्चायं स्वशब्देन व्यवच्छेद्यमानोन समानमर्थं शक्नोति वक्तुम्, व्यर्थं वा विशेषणम् । सामान्यशब्दा अपि विशेषे वर्तन्त इति(१) दृष्टमेतत् ? न ते सामान्यशब्दा ये विशेषेषु वर्तन्त इति । किन्तु प्रकरणादिभेदानुविधायिनो विशेषशब्दा एव । अपि च साधनीयः पक्षः स्वपक्षः दूषणीयः पक्षः परपक्षः । तदेतदपि न बुध्यामहे साधनीयशब्दस्य पक्षविषयत्वात् साधनीयः पक्षःस्वो भवतु, दूषणं तु न कदाचित् परपक्षेण सम्बध्यते परपक्षस्य तावत्साधनीयत्वात् । अथ दूषणस्य को विषयः ? कस्यचित् स्थापना विषय इति किञ्चिद्दूषणं स्वपरपक्षाभ्यामसम्बद्धमेव । कतमद्दूषणं स्थापनया सम्बद्ध्यते ? । का चेयं स्थापनेति ? स्थापना नाम पञ्चावयवं साधकं वाक्यम्, वाक्यदोषो दूषणं, तद्वाक्यं न्यूनमधिकं च इति अवयवाभासोपपन्नञ्च, तदुद्भावनं दूषणमेतत् स्थापनया सम्बध्यते तद्विषयत्वात् । शेषं तु दूषणं न स्थापनया न स्वपरपक्षाभ्यां सम्बद्धम् उत्तरदोष आक्षेपमात्राश्चेति । सत्यं न साक्षात् पक्षस्य दूषणेनाभिसम्बन्धः स्थापनानिवृत्तिद्वारेण तु प्रवर्तमानं दूषणं ( न पक्षं निवर्तयति ) स्थापनानिवृत्तेः परपक्षं दूषयतीत्युच्यते ? उपचरितशब्दप्रयोगो लक्षणेऽनुपपन्नो लक्षणस्य तत्त्वविषयत्वात् तत्त्वव्यवच्छेदकं लक्षणम् न पुनरुपचरितशब्दप्रयोगेन तस्यास्ति । यदि च पारम्पर्येण प्रवृत्त्या प्रवर्तमानं दूषणं परपक्षं निवर्तयति तदैवं युक्तं कर्त्तुं परपक्षासिद्ध्यर्थं वचनं वाद इति । एवमभिधीयमाने किं भविष्यतीति ? लघु च सूत्रं भवतीत्युभयोश्च साधनदूषणयोः पारम्पर्येण परपक्षासिद्ध्यर्थतेति । अथ माभूदुभय-

(१) इत्यदृष्टमेतत् इति २ पु० पा० ।

त्र पारम्पर्यमिति ? स्वरूपत एवं वक्तव्यं— पक्षस्थाप
द्ध्यसिद्ध्यर्थं वचनं वाद इति। एवं हि विस्पष्टता लक्षण
विषयं चाभिसम्बन्ध इति । स्थापनयापि न सर्वं
म्बध्यत इति दोषतादवस्थ्यम् ? न दोषतादवस्थ्यं
सम्भवात् । किञ्चिद् दूषणं स्थापनया सम्बध्यत
मान्याभिधानेऽपि सामर्थ्यान्नियमः तस्मादिदमनुपपन्नं
यदूषणीयार्थौ स्वपरशब्दाविति । स्वपरशब्दौ पूर्वोत्तरप
विष्यत इति ? यदुक्तम्भवति पूर्वोत्तरपक्षाविति तदुक्तं
परपक्षाविति । न युक्तमेतदपीति साधनदूषणयोर्नियमा
ते साधनदूषणैरित्येतस्मिन् सूत्रे साधनदूषणयोर्नियमाभि
पक्षसाधनं परपक्षे दूषणमिति । एतस्मिँश्च नियमे
दूषणं प्राप्नोति तेनोत्तरपक्षवादी स्वमेव पक्षं दूषयतीति(१)
स्वपक्षश्चोत्तरवादिनः पूर्वपक्षादन्य इति स्वपरशब्दाभ्यां
क्षयोरभिधानमिति न पदार्थो न परिभाषा न च रूढिः।
तिपक्षार्थता प्रथमद्वितीयपक्षार्थता च व्याख्याता ।
पक्ष इति विशेषणद्वययोगात् साध्यतया दूष्यतया च
णः स्वपरशब्दवाच्य इति ? युक्तमेतद्द्विवचनं तु न युक्त
स्यानेकविशेषणयोगो न प्रतिषिध्यते द्विवचनं तु न भव
मः न ह्येकस्यानेकविशेषणाभिसम्बन्धे सति द्विवचनबहु
तः नहि देवदत्तं छत्रदण्डाभ्यां सम्बद्धं समुपलभ्य वक्तारो
छत्रिदण्डिनावागताविति । तदेवं विकल्पानुपपत्तेः स्व
पपत्तिः ।

समासासम्भवाच्च— स्वपरपक्ष इति समासपदे
तावद्विशेषणविशेष्यस्वरूपानवगतेर्न षष्ठीसमासः यत्र पु

(१) तेनोत्तरपक्षं बाधयतीति प्राप्तमिति २ पु. पा.

समस्यते तत्र विशेषणं विशेष्यात् पृथगवधार्यते यथा राजपुरुष इति । भेदाच्च—यत्र च विशेषणविशेष्यभावो भवति तत्र भेदो दृष्टो राजपुरुषवदेव । असत्यपि भेदे दृष्ट इति चेत् असत्यपि भेदे दृष्टः षष्ठीसमासः तद्यथा सेनापतिः पानकाङ्गमिति ? तच्च नानभ्युपगमात्—को हि सुस्थात्मा(२) पानकशब्दार्थमङ्गेभ्यो नार्थान्तरं प्रतिपद्यते सेनां च सैनिकेभ्य इति । यथा च सेनादीन्यर्थान्तरभूतानि तथोक्तं गुणगुणिवाद इति । अथ मन्यसे स्वार्थः स्वशब्दस्यार्थः साधनीयोऽर्थश्च पक्षशब्दस्येति ? तन्नापोदितत्वात् । यथा स्वार्थवाचकः शब्दो न भवति तथोक्तम्, तस्मान्न षष्ठीसमासः । एतेन कर्मधारयः प्रत्युक्तः स्वश्चासौ पक्षश्चेति विशेषणस्वरूपासिद्धेर्भेदाभावात् । एतेन बहुव्रीहिरपि प्रत्युक्तः । साधयितृविषयं च साधनं प्राप्नोति अतो न बहुव्रीहिः । ननु च साधनीयार्थता स्वार्थः पक्षविशेषणत्वेन सम्भवति ? न सम्भवति पर्यायत्वात्—साधनीयः पक्ष इति पर्याय एव, न च पर्यायशब्दैः समानाधिकरणो बहुव्रीहिः सम्भवति । नहि भवति वृक्षतरुं छिनत्तीति । विरोधाच्च । यदि तावदयं पक्षशब्दः स्वपक्षाद्भिद्यते (पर)पक्षवचनं प्रतिज्ञेति व्याघातः । किं कारणम्, प्रतिज्ञायाः स्वपक्षविषयत्वात् । अथाभिन्नस्तथापीदं न प्राप्नोति स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति । न चान्यः समासः सम्भवति । न चेदं वाक्यम्, तस्मात् स्वपरपक्षयोरित्यसारम् ।

आस्तां तावत् स्वपरशब्दार्थो विशेषणविशेष्यभावश्च स्वपरशब्दयोः । अथ समासः कस्मान्न क्रियते स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति ? किमेवं कृते भवति ? स एवार्थो लाघवं च ।

अत्र केचित् परिहारं ब्रुवते—यदि किल समासः क्रियते उभ-

(२) स्वस्थात्मा इति २ पु० पा० ।

याश्रिते सिद्ध्यसिद्धी भवतः । न । दोषतादवस्थ्यात्-दोषोऽसमासकरणेन परिह्रियते । कथमिति ? स्वपक्षसिद्ध्यर्थं वचनं परपक्षसिद्ध्यसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थमिति । नासामर्थ्यात्—न ह्ययं समासः समर्थः स्वपक्षसिद्ध्यर्थमिति ! कस्मात् ? व्याहतत्वात् यदि सिद्ध्यर्थं यतते असिद्ध्यर्थमिति व्याघातः यद्यसिद्ध्यर्थं यतते सिद्ध्यर्थमिति व्याघातः यद्यसामर्थ्यान्न समासः समासेऽपि तर्ह्यसामर्थ्यात् नो सिद्ध्यसिद्धिप्रसङ्गः ।

एकवचनबहुवचनप्रसङ्ग इत्यन्ये—यदि किल क्रियेत समासोऽनभिव्यक्तवचनभेदः तस्माद्वचनभेदनिमित्तोऽसमासः । कथं नाम स्वपरपक्षयोः सिद्ध्यसिद्धिवादः स्यात् न स्वपरपक्षाणां न स्वपरपक्षस्येति । नाम... कस्य तावत्सिद्ध्यसिद्ध्यर्थं वचनं नैवास्ति, स्वपरपक्षा... धनमनुमानमेकमिति कथाप्येषा नास्त्यतोऽस्थाने आशङ्का...

अनित्यः समासविधिरित्यपरे—अपरे समासविधिं वर्णयन्त एवमाहुः—नायमवश्यं विधिः सर्वत्र समासः क्वचित् समासः क्वचिच्च वाक्यम् यथा च राज्ञः पुरुषः... इति च समासः । यदि उभयप्राप्तिरसमासः कस्मात्... समासविधिरिति एवं ब्रुवतोक्तं भवति प्राप्तमुभयम् । अ... सौ कस्मादसमास इति । समासः कस्मादित्यनिवृत्तोऽनुपा... निवृत्तो लाघवार्थत्वात् समासे लाघमेवासमासे गौरवम् ... सर्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं ... वर्णे गुरुलाघवानभ्युपगम इति चेत् ? नायं परिहारोऽनु... निवृत्तेः । वर्णे गुरुलाघवानुयोगं न प्रतिमन्यामह इति निवर्ततेऽनुयोगः कस्मादिति ? । शास्त्रत्वेन च वादि...

भ्युपगम्यते न च वर्णे गुरुलाघवमाश्रीयत इति न युक्तम् ।
सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तम्। कस्मात् ? द्वेधाऽनुपपत्तेः अयं खलु सिद्धिशब्दः कल्प्यमानो द्वेधा कल्प्येत व्यक्तावुत्पत्तौ वा, तत्र तावदुत्पत्तौ युज्यते प्रतिज्ञादिकस्य साधनस्य साधनभावहानिप्रसङ्गात् नहि प्रतिज्ञादिसाधनेन वस्तूत्पाद्यते, किं तु विद्यमानप्रकाशकत्वं साधनार्थः स हीयते सिद्धावुत्पत्तौ कल्पितायामिति । व्यक्ताविति चेत् नाधिकरणाधारत्वात्— अथ मन्यसे सिद्धिर्व्यक्तिर्नोत्पत्तिः ? युक्तमेतदुत्तरं तु व्याहतं भवति अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति । ये चैतेऽधिकरणप्रत्यायनलक्षणे सिद्ध्यसिद्धी तेऽधिकरणे वर्तमाने कथं पक्षस्य भवत इति षष्ठ्यर्थो वाच्यः । नायं(२) दुर्वचः तद्विषयत्वात्—तयोः सिद्ध्यसिद्ध्योः पक्षो विषयः अतस्तद्विषयत्वात्तस्येति ?। न युक्तमेतत् । ये ते सिद्ध्यसिद्धी पक्षविषये ते किं तावत् पक्षे सिद्धे उतासिद्धे ? यदि तावत् सिद्धे, नाधिकरणप्रत्यायनं सिद्धिः, किन्तर्हि ? यतस्तत्प्रत्यायनं सा सिद्धिः। कुतश्च तद्भवति ? अर्थस्य तथाभावात्—यस्मात् सोऽर्थस्तथा भवति। कथं तथा भवति ? यथा प्रमाणैरभिसम्बद्ध इति— यत् प्रमाणैरभिसम्बद्धत्वं स तथाभावः । अथासिद्धे पक्षेऽधिकरणप्रत्यायनं भवति ? साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं स्यात् । पक्षस्य सिद्धिरधिकरणप्रत्यायनम् असिद्धिस्तु कथम् ? नहि परपक्षासिद्धिर्दूषणेन क्रियत इत्युक्तम् । स्थापनानिवृत्तेरुपचार इति चेत्—स्यान्मतिर्दूषणं प्रयुज्यमानं साक्षात् स्थापनां निवर्तयति स्थापनानिवृत्तेस्तु परपक्षनिवृत्तिरुपचर्यत इति ? न । प्रयोजनाभावात्— नहि प्रयोजनव्यतिक्रमेण मुख्यार्थव्यतिक्रमो लभ्यते,

(१) स चायमिति २ पु. पा ।

अपि तु प्रमाणासम्भवेनोपचारो मञ्चाः क्रोशन्तीति
कप्रयुक्तशब्दविषयश्चोपचारः लोकगत्या शब्दार्थः, न
किकं वाक्यं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं

अपरे तु प्रतिज्ञातार्थाज्ञापनं पक्षस्यासिद्धिं
तद्यप्यधिकरणविषयं, न निवर्तते प्रसङ्गः, कथं- पक्षस्या
सिद्धिवत्प्रसङ्गः तस्मात् सिद्ध्यसिद्धी पक्षधर्मावेव यत
सिद्धः पक्षोऽसिद्धश्चेति । एवं सति द्रष्टृस्थे सिद्ध्यसिद्धी
घातः। यदि सिद्ध्यसिद्धी पक्षधर्मौ द्रष्टृस्थे सिद्ध्यसिद्धी
हतं भवति । अथ माभूद्व्याघात इति द्रष्टृस्थे एव ते ! प
क्षस्य व्यक्तयव्यक्ती सिद्ध्यसिद्धी इति व्याहतं भवति। अ
तथाते पदार्थस्य सिद्ध्यसिद्धी ? तथाप्यधिकरणप्रत्याय
द्ध्यसिद्धी इति व्याहतं भवति । के पुनरेते व्यक्तयव्यक्ते
स्तुधर्मावभिधानप्रत्ययहेतू यत एव तावभिधानप्रत्ययौ व्यक्तो
क्तश्चेति भवतः ते व्यक्त्यव्यक्ती इति । अर्थशब्दानुप
कल्पानुपपत्तेः—अर्थशब्दः खलु प्रवर्तमानस्त्रेधा प्रवर्तते
प्रयोजनाभिधेयविषयत्वेन, उद्देशे तावदर्थशब्दो यथा
भक्तमिति । एवं चतुर्विधवाक्यासङ्ग्रहः । प्रयोजनेऽर्थशब्द
मर्थमागतोसीति । अभिधेयेऽर्थशब्दो यथा गौरित्यभिधान
ऽर्थ इति । तत्र तावदुद्देशे सम्भवति युक्तायुक्तत्वेनेति
तत्वात्—स्वपक्षस्य युक्तत्वेन परपक्षस्यायुक्तत्वेनेत्येवं
कुत उद्देशशब्दार्थः न ह्ययं युक्तायुक्तशब्दो दूषणाभा
नाभासे वा सम्भवति साधनयोगो युक्तता दूषणा
क्तेति । अथ पुनः पदार्थस्य तथात्वातथात्वे युक्त
युक्तत्वं तथाभावोऽयुक्तत्वमतथाभाव इति ? तथापि उभय
तयोपादानात् युक्तत्वेनाधिकरणप्रत्यायनमयुक्तत्वेन बोधि

